(4). Do do designated D.

Comprises 1st Pariccheda only: undated but old.

(5) Mallinātha's Niskanṭaka designated E.

Comprises 1st Pariccheda only.

(6). " " " F. "
Pariccheda only.

(7) Jñānapūrṇa's Laghudīpikā " G.

As the remaining chapters of the Niṣkanṭaka are not available, their place will be taken by those of the Laghudīpikā, and the first chapter of the latter work will be printed separately at the end of this edition.

A. V.

---

## Appendix A.

### लघुदीपिकाया आरम्भः।

॥ ॐ नमो गणेशाय ॥

वन्दे मानससंफुल्लसरोजाननहंसगां।
सरस्वतीं चतुर्वक्त्रां चन्द्ररेखावतंसकां॥
न्यायरत्नाकरोत्था या विद्याश्रीरखिलार्थदा।
तस्यास्तार्किकरक्षायाः करोमि पदचिन्तनं॥
पुरा वरदराजेन न्यायशास्त्रार्थसंग्रहः।
कृतः परत्वतो बुद्ध्वा पद्यानां दुर्ग्रहार्थतां॥
तेनैव रचिता व्याख्या सा च शास्त्रपदं गता।
ततस्तदर्थसिद्ध्यर्थं करोमि लघुदीपिकां॥

पुस्तकस्य १५ पत्रे ।

एवं तार्किकरक्षायां ज्ञानपूर्ण्णमुखोद्गता ।
प्रमेयस्य पदार्थस्य संपूर्ण्णा लघुदीपिका ॥

ग्रन्थसमाप्तौ ।

सर्वैश्वर्यनिजावासं सर्वविद्यानिषेवितं ।
श्रीयज्ञेश्वरहरेः सूनुं श्रीविष्णुस्वामिगुरुं नुमः ॥
वरदराजीयटीका समाप्ता ॥ मंगलमस्तु ॥ संवत् १४५९
वर्षे वैशाप (ख) शु २ व्यासगोवर्द्धन एतेषाम् ।
व्यासकाह्न एतेषां ।

## Appendix B.

भविष्यपुराणे भक्तिमाहात्म्ये २१ अध्याये ।

अतः परं त्वनुक्तानां पुराणे चरितं ब्रुवे ।
आसन् सिद्धान्तकर्तारश्चत्वारो वैष्णवा द्विजाः ॥
यैरयं पृथिवीमध्ये भक्तिमार्गो दृढीकृतः ।
विष्णुस्वामी प्रथमतो निम्बादित्यो द्वितीयकः ॥
मध्वाचार्यस्तृतीयस्तु तुर्यो रामानुजः स्मृतः ॥

ॐ नमः परमात्मने ।

# तार्किकरक्षा ।

श्रीवरदराजकृता ।

तत्कृतन्यायसारसंग्रहाभिधव्याख्यासहिता ।

कोलाचलश्रीमल्लिनाथसूरिविरचित-
निष्कण्टकाव्याख्यानुगता ।

ॐ श्रीकृष्णाय नमः ।

नमामि परमात्मानं स्वतः सर्वार्थवेदिनम् ।
विद्यानामादिकर्तारं निमित्तं जगतामपि ॥

श्रीगणेशाय नमः ।

परस्परोपासकभावभाजौ कौचिद्दयालू कलये पुमांसौ ।
ययोरभूदेकतरः कलत्री भूकन्यया भूधरकन्ययाऽन्यः ॥ १ ॥

वाणीं काणभुजीमजीगणदवासासीच्च वैयासिकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाकलयद्रहस्यमखिलं यश्चाक्षपादस्फुराम्
लोके ऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥ २ ॥

श्रीमल्लिनाथकविरेष करोति टीकाम्
वाणीगणेशचरणाम्बुरुहावलम्बी ।
निःशेषकण्टकनिराकरणेन नाम्ना
निष्कण्टकां वरदराजनिबन्धनस्य ॥ ३ ॥

**प्रारिप्सितस्य ग्रन्थस्य(१) प्रेक्षावदुपादित्साप्रयोजिकामभिमतफलसाधनतामभिधाय श्रोतृबुद्धिमनुकूलयन् वर्त्तिष्यमाणमेवाग्रे दर्शयति ।**

इह खलु तत्रभवान् बालानुकम्पी वरदराजः सकलन्यायशास्त्ररहस्योपदिदिक्षया(२) स्वविरचिततार्किकरक्षाश्लोकव्याख्यानाय सारसंग्रहं नाम प्रकरणमारभमाणस्तदविघ्नपरिसमाप्तिसम्प्रदायाविच्छेदलक्षणफलकाम्यया विशिष्टामिष्टां च देवतामभिवादयते । नमामीति(३) । परमात्मानमिति परमः सर्वोत्कृष्टो जीवात्मभ्यो विशिष्टः तमात्मानमीश्वरमित्यर्थः । सन्महत्परमेत्यादिना समासः । परमत्वे हेतुमाह सर्वार्थवेदिनमिति । योगिसाधारण्यं परिहरति स्वत इति । नित्यसर्वज्ञतया स्वाभाविकमस्य सार्वज्ञ्यं न तु योगप्रसादासादितमिति भावः(४) तत्सद्भावे प्रमाणद्वयं सूचयति । विद्यानामिति । चतुर्दशविद्यानामपीति भावः । आदिकर्त्तारं सर्गादौ प्रणेतारं तथा जगतां जनिमतां निमित्तमादिकर्त्तारम् ईशानः सर्वविद्यानां तस्मात्तपस्तेपनाच्चत्वारो वेदा अजायन्त यतो वा इमानि भूतानि जायन्त इत्यादिश्रुतेरिति भावः । एतेन वैदिकः सन्दर्भः केनचित् प्रणीतः सन्दर्भत्वाद्रामायणवत् । तथाङ्कुरादिकं सर्वं सकर्तृकं कार्यत्वात् घटवदिति चानुमानद्वयादीश्वरसिद्धिरिति सिद्धम् । अत्रैव केवलव्यतिरेकिद्वयं चानुमाने स्वयं वक्ष्यति ।

(१) प्रारिप्सितग्रन्थस्य–पा· B पु· ।

(२) संक्षिप्य–इत्यधिकम् E पु· ।

(३) नमामि परमात्मानमिति–पा· E पु· ।

(४) नित्यसर्वज्ञतया स्वाभाविकी सर्वार्थवेदिता न तु योगप्रसादासादिततया सर्वार्थवेदित्वमिति भावः–पा· E पु· ।

**(१)निःश्रेयसफलं प्राहुर्येषां तत्त्वावधारणम् ।**
**प्रमाणादिपदार्थास्ते लक्ष्यन्ते नातिविस्तरम् ॥१॥**

येषां प्रमाणादिनिग्रहस्थानान्तानां षोडशपदार्थानां तत्त्वतोऽवधारणमात्यन्तिकदुःखविच्छेदलक्षण-

---

एतेन देवताया वैदिकत्वाद्विघ्नकर्तृत्वाच्च वैशिष्ट्यमिष्टृत्वं चोक्तमिति द्रष्टव्यम् । ननु यदभिधित्सितं तदभिधीयतां फले व्यक्तिर्भविष्यतीति न्यायात् किं वृथाग्रे(२) वक्ष्यमाणार्थप्रतिज्ञाडम्बरविलम्बैरित्याद्यश्लोकाक्षेपमाशङ्क्य समाधत्ते । प्रारिप्सितस्येति । प्रेक्षावतां धीमतामुपादित्सा स्वचिकीर्षा तत्र प्रयोजिकां हेतुभूतामित्यर्थः । प्रेक्षावत्प्रवृत्तेः प्रयोजनज्ञानाधीनत्वात् तज्ज्ञापनायाग्रे प्रतिज्ञा कार्येति भावः । यथाहुः कारिकायामाचार्याः ।

सर्वस्यापि हि शास्त्रस्य कर्मणो वाऽपिकस्य चित् ।
यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यत ॥ इति

ततस्तदर्थपरामर्शितामाह । येषां पदार्थानामिति । किं षण्णां नेत्याह । षोडशेति । दिक्संख्ये सञ्ज्ञायामिति समासः सप्तर्षिवत् अन्यथा बहुत्वाद्यसिद्धेः । यद्वा पूरणप्रत्ययान्तोऽयं षोडशशब्दः तेषां च प्रत्येकमेव षोडशसंख्यापूरकत्वात् सर्वे षोडशाः ते च ते पदार्थाश्चेति विग्रहः । ते च सूत्रोद्दिष्टा एवेति स्मारयति । प्रमाणादीति । तत्त्वा-

---

(१) अत्र प्रथमं "नमामि परमात्मान"मिति पद्यं A पुस्तके वर्तते तच्च टीकास्थं लेखकप्रमादाच्च संनिविष्टम् यतो मल्लिनाथेन निष्कण्टकायां "तार्किकरक्षाश्लोकव्याख्यानाय सारसंग्रहं नाम प्रकरणमारभमाण" इत्याद्युक्त्वा "इष्टां देवतामभिवादयते । नमामि परमात्मानमिति" उक्तम् ।

(२) किं मुधाग्रे—पा E पु० ।

निःश्रेयसफलत्वेनाक्षचरण[1]पक्षिलमुनिप्रभृतयो वर्णयन्ति । यथा प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम इति[2] । तदिदानीं पदार्था लक्ष्यन्ते समानासमानजातीयव्यवच्छेदकधर्मवत्तया प्रदर्श्यन्त इत्यर्थः । ननु

---

वधारणं याथात्म्येन निर्णयः । निश्चितं श्रेयो निःश्रेयसं मोक्षः । अचतुरादिना निपातनात् साधुः । तत्स्वरूपे वादिविप्रतिपत्तेर्विवक्षितं लक्षणमाह । आत्यन्तिकेति । एतच्चोपरि विवेचयिष्यते । प्राहुरित्यस्य प्रशब्दस्य सामर्थ्यात्प्रतिपादनमर्थो नोक्तिमात्रमित्याह । वर्णयन्तीति । तस्य कर्त्राकाङ्क्षां पूरयति । अक्षचरणेति । अक्षचरणपक्षिलौ सूत्रभाष्यकारौ प्रभृतिशब्दाद्वार्त्तिककारादिसंग्रहः । तत्र सूत्रं संवादयति । यथा प्रमाणेत्यादि । प्रमाणं विना प्रमेयासिद्धेः । विषयं विना प्रमाणाप्रवृत्तेः । असन्दिग्धस्याप्रतिपित्सितत्वात् । सन्दिग्धस्यापि निःप्रयोजनस्याप्रतिपित्सितत्वात् । प्रतिपत्तेश्च दृष्टान्तमुखत्वात् । अवयवादिनियमस्य सिद्धान्तानुसारित्वात् । प्रमाकरणशरीरनिर्वर्तकाङ्गत्वात् । प्रमाणानुग्राहकत्वात् । तत्फलत्वात् । तस्यापि कथासाध्यत्वे वादस्य तत्त्वनिर्णयफलत्वात् । जल्पस्योभयपक्षसाधनवत्त्वसाम्यात् । वितण्डायाः कथापारिशेष्यात् । निग्रहहेतुषु सर्वथा हेयत्वात् । दोषेषु लघुत्वात् फलत्वाच्चेति प्रमाणादिपदार्थोद्देशक्रमः । यत्तदोः

---

(१) क्षचरण–पा॰ C पु ।

(२) न्यायव्याटिमं सूत्र–मित्यधिकं C पु॰ ।

चिरन्तननिबन्धनानि तत्र तत्र विद्यन्ते तान्येव शिष्येभ्यो व्याक्रियन्तां किमनेनापूर्वनिर्माण[(१)]क्लेशेनेत्यत उक्तम् । नातिविस्तरमिति । अतिविततगहनगम्भीरैस्तैरलसप्रायाः शिष्या न व्युत्पादयितुं शक्यन्त इत्यर्थवानेवायमारम्भः । शब्दमात्रस्यैवेह[(२)] प्रपञ्चो निषिध्यते नार्थस्येति विस्तरशब्दं प्रयुञ्जानस्याशयः[(३)] ॥ १ ॥

---

सामानाधिकरण्येनोत्तरार्द्धं योजयति । तदिदानीमिति । लक्ष्यन्ते इति लक्षेर्दर्शनार्थत्वात् तस्य चोपलब्धिपर्यायस्योद्देशादित्रये ऽपि सम्भवात् त्रयस्यापि कर्तव्यत्वाच्चार्थसन्देहे लक्षणपरत्वेन व्याचष्टे । लक्ष्यन्ते समानेति । अत्रोद्देशस्य सौत्रस्यैव स्थितत्वात् परीक्षायास्तु लक्षणशेषत्वादाहृत्य तस्यैव तत्त्वावधारणहेतुत्वात् प्राधान्येन लक्षणतः प्रदर्शनं लक्षेरर्थ इति भावः । नातिविस्तरमिति न वक्तव्यं विस्तरेऽपि सप्रयोजने प्रवृत्तिसिद्धेरित्याशङ्क्यान्यथासिद्धिमूलानारम्भशङ्कोत्तरत्वेनावतारयति । ननु चिरन्तनेति । निबन्धनानि सूत्रभाष्यवार्त्तिकप्रभृतीनीत्यर्थः । एतावता कथमारम्भसिद्धिरत आह । अति विततेति । विततं विस्तृतं टीकादि । गहनमकृत्स्नार्थतया साकाङ्क्षप्रकरणान्तरं गम्भीरं गुर्वर्थं सूत्रभाष्यादि । अतिशब्दः प्रत्येकं सम्बन्धनीयः । नन्वस्यापि सङ्क्षेपादकृत्स्नार्थतादोषः इत्यत आह । शब्दमात्रस्यैवेति । प्रथने वाचशब्द इति तन्मात्रे विस्तरशब्दानुशासनादिति भावः ।

---

(१) ग्रन्थसन्दर्भनिर्माण–पा· C पु· ।
(२) मात्रस्यैवात्र–पा· B पु· ।
(३) भावः–पा· B पु· ।

प्रमाणाधीनसिद्धित्वात् इतरपदार्थानां प्राधान्येन[१] प्रथमोद्दिष्टं प्रमाणं लक्षयति तावत्[२] ॥

**तत्र प्रमाणं प्रमया व्याप्तं प्रमितिसाधनम् ।**
**प्रमाश्रयो वा तद्व्याप्तो यथार्थानुभवः प्रमा ॥ २ ॥**

(प्रमया वक्ष्यमाणलक्षणया अयोगव्यवच्छेदेन सम्बन्धः प्रामाण्यम् । यथाहुः नैयायिकाः । प्रमायोगव्यवच्छेदसम्बन्धः प्रामाण्यम् । तद्वत्प्रमाणम् । प्रमाणसम्बन्धश्चाश्रयत्वेन करणत्वेन च विवक्षितः । तेन न केवलं साधनमेव प्रमाणम् अपि त्वाश्रयोऽपी-

---

भतिशब्दाच्छब्दविस्तरस्यापि श्लोकशोऽङ्गीकारान्नास्त्यवैशद्यदोषोऽपीत्यभिसन्धिरनुसन्धेयः । एतेन पदार्थतत्त्वं विषयः । तत्त्वज्ञानं प्रयोजनम् । [३]साध्यसाधनभावः सम्बन्धः । मुमुक्षुरधिकारीत्यनुबन्धचतुष्टयसम्भवादिह प्रेक्षावतां प्रवृत्तिलाभ इति सिद्धम् ॥ १ ॥

अथोत्तरश्लोके प्रथमतः प्रमाणलक्षणे हेतुमाह । प्रथमोद्दिष्टमिति । सूत्र इति शेषः । सौत्रे प्रथमोद्देशे हेतुमाह । प्रमाणाधीनेति । तत्र तेषां पदार्थानां मध्ये इत्यर्थः । इह श्लोके वाशब्दात् प्रमाव्याप्तपदावृत्त्या च साधनमाश्रयो वान्यतरत्प्रमाव्याप्तं प्रमाणमिति व्रीहियववदैच्छिको विकल्पः प्रतीयते । तदसत् । उभयप्रामाण्यवादिनामन्यतराव्याप्तेरपसिद्धान्तापत्तेरित्याशङ्क्य साधनमाश्रयश्चेति द्वयमपि प्रमाव्याप्तं प्रमाणं वाशब्दश्चार्थः ।

---

(१) प्राधान्येन-क॰ ख पु॰ ।
(२) तावदिति-C पु॰ नास्ति ।
(३) एतेन-इत्यधिकं F पु॰ ।

त्येतावत्प्रदर्शनायोक्तम् । अयोगव्यवच्छेदेनेति । साधनत्वेन प्रमासम्बन्धेनाभिनिवेष्टव्यम् । असम्बन्धनिवृत्तिमात्रेण प्रामाण्यमित्येतावदुक्तं भवति ।)(१)

साधनाश्रययोरन्यतरत्वे सति प्रमाव्याप्तं प्रमाणम् । ततश्चेश्वरस्यापि प्रमाश्रयतया प्रामाण्यसिद्धेर्नाव्याप्तिरिति भावः । न च प्रमाश्रयैरनीश्वरात्मभिः प्रमाकरणैश्च यादृच्छिकसंवादिलिङ्गविभ्रमादिभिरतिव्याप्तिः । तेषां प्रमासम्बन्धे नियमाभावात् । न तर्हीन्द्रियलिङ्गशब्दाः प्रमाणं भवेयुः तेषामपि नियमाभावादिति चेत् । माभूवन् । न हि वयं तेषां प्रामा-

प्रमाव्याप्तपदावृत्तिश्च प्रत्येकं विशेषणार्थेति मत्वा व्याचष्टे । साधनाश्रययोरिति । साधनाश्रययोरन्यतरत्वं नाम तदुभयव्यतिरिक्तत्वानधिकरणत्वम् । एवं चानुगतार्थलाभान्नान्यतरशब्दार्थखण्डनावकाशः । अत्राश्रयपदोपादानस्य फलमाह । ततश्चेति । साधनपदस्य तु स्फुटमेव करणव्याप्तिः फलमिति भावः । शेषमतिव्याप्तिनिरासार्थमित्याह । न चेति । लिङ्गविभ्रमो बाष्पादिः । आदिशब्दाक्रान्तादिवाक्यानां गवयादौ महिषादिसादृश्यस्य च संग्रहः । कुतो नातिव्याप्तिरित्याशङ्क्य प्रमाव्याप्त्यभावादित्याह । तेषामिति । हन्तैकं सन्धित्सतोऽपरं प्रच्यवते यतोऽतिव्याप्तिं प्रतिक्षिपन्तमव्याप्तिरास्कन्दतीति शङ्कते । न तर्हीति । अव्याप्तौ हेतुमाह । तेषामपीति । तेषामौदासीन्यस्यापि सम्भवादिति भावः । इष्टापत्त्या परिहरति । माभू-

(१) ( ) एतन्मध्यस्थः B पु॰ नास्ति ।

ण्यमभ्युपगच्छामः । इन्द्रियार्थसन्निकर्षविशेषस्य लिङ्गपरामर्शादेश्च प्रामाण्याभ्युपगमात् । ते च प्रमां न व्यभिचरन्तीति नाव्याप्तिः । एवं प्रमासम्बन्धे ऽपि प्रमेयस्य व्यभिचारान्न प्रामाण्यप्रसङ्गः । किमर्थं तर्हि साधनमाश्रयो वेति विशेषणम् व्याप्त्युपादानादेव प्रमेयादिव्यावृत्तिसिद्धेरिति चेत् सत्यम् । तयोरेव प्रमाव्याप्तिः सम्भवतीत्येतावता तदुपादानम् न तु लक्षणशरीरानुप्रवेशेन सुखादिप्रमेयव्यावर्त्तनेन वा तदनुप्रवेश इति(१) न वैयर्थ्यम् ।

यथार्थानुभवः प्रमा । यथार्थानुभव इति प्रमा-

---

वन्निति । किं तर्हि प्रमाणमत आह । इन्द्रियार्थेति । सन्निकर्षविशेषस्यालोकादिसहकारिसाकल्यमेव विशेषः । लिङ्गपरामर्शस्तृतीयः प्रत्ययः आदिशब्दाच्च गृहीतसङ्गतिकशब्दविशेषसादृश्यविशेषयोः संग्रहः । न चैवमव्याप्तेरवकाश इत्याह । ते चेति । नापि प्रमेये ऽतिव्याप्तिः व्याप्त्यभावादेवेत्याह । एवमिति । तर्हि व्यावृत्त्यभावात् साधनाश्रयग्रहणं व्यर्थमिति शङ्कते । किमर्थमिति । प्रौढवादेनाङ्गीकृत्योत्तरमाह । सत्यमिति । प्रमाव्याप्तमित्येतावदेव लक्षणं शेषं तूदाहरणार्थमिति भावः । अथवा वास्तवपरिहारमाह । सुखादीति । सुखदुःखयोरनुभूतैकसत्त्वेन प्रमाव्याप्तत्वमिति भावः । किं चेश्वरप्रमया नित्यसर्वार्थगोचरया प्रमेयमात्रस्यापि प्रमाव्याप्तेस्तन्निरासेनार्थवत्त्वं द्रष्टव्यम् ।

नन्नु प्रमाणलक्षणप्रस्तावे प्रमालक्षणमसङ्गतमित्या-

(१) तदुपादान स्यादिति-पा. C पु. ।

लक्षणम् । तत्र यथार्थेत्ययथार्थविषयाः पीतशङ्खादिविभ्रमा व्युदस्यन्ते तत एव तर्कसंशययोरपि व्यवच्छेदसिद्धिः । तर्कस्याहार्यलिङ्गजनितत्वेनारोपितविषयत्वस्याग्रे समर्थयिष्यमाणत्वात् । विरुद्धानियतकोटिद्वयावलम्बिनश्च संशयस्य तादृशविषयासम्भवेनायथार्थत्वात् । अनुभव इति स्मृतेर्निरासः । किमिदमनु-

---

शङ्क्य प्रकृतोपयोगान्न दोष इत्यभिप्रेत्याह । यथार्थानुभव इति । तत्राद्यविशेषणस्य व्यावर्त्यमाह । यथार्थेति । अयथार्थविषयत्वं तु तेषां बाधदर्शनादिति भावः । तस्यैव व्यावर्त्यान्तरमाह । तत एवेति । अयथार्थविषयत्वादेवेत्यर्थः । ननु तर्कस्य व्याप्तलिङ्गसमुत्थस्य प्रमाणाङ्गभावेन प्रमितिजनकस्य कथमयाथार्थ्यमित्याशङ्क्य बाधादित्याह । तर्कस्येति । व्याप्तलिङ्गस्याप्यारोपितत्वाद्दोषमूलारोपवद्बुद्धिमूलारोपेऽपि विषयापहारस्य तुल्यत्वादयाथार्थ्यं तथात्वेऽप्यनिष्टप्रसञ्जनद्वारा साध्याभावशङ्कोच्छेदकत्वात् प्रमाणाङ्गत्वं चेति भावः । तर्हि संशयो नायथार्थः तद्विषयस्य विभ्रमवद्बेदमिति बाधादर्शनादित्याशङ्क्याह । विरुद्धेति । यस्य ज्ञानस्य यावद्विषयः तस्य तथैव सत्त्वे तद्यथार्थं नान्यथेति स्थितिः । संशयस्य हि विरुद्धानियतकोटिद्वयात्मा विषयः । तस्य च तादृशस्यानन्तरमेव नियतैककोटिग्राहिणा तदुपमर्दकज्ञानेन बाधादसम्भवादयथार्थमित्यर्थः । तदुक्तं शालिकायां पूर्वपक्षे ।

> स्थाणुर्वा पुरुषो वेति सन्देहो योऽपि जायते ।
> अभावात् तादृशार्थस्य स यथार्थः कथं भवेत् ॥ इति ।

अथानुभवपदव्यावर्त्यमाह । अनुभव इति । तद्धस्याः

भवत्वं नाम । प्रत्युत्पन्नासाधारणकारणप्रसूतप्रत्ययत्वं वा(१) तदविदूरप्राक्कालोत्पत्तिनियतासाधारणकारणप्रसूतप्रत्ययत्वं वा । स्मृतेस्त्वसाधारणकारणं संस्कारः । तस्य तदुत्पादने तात्कालिकत्वनियमाभावान्न

स्मृतेर्भेदकं वाच्यम् । अन्यथा तद्व्यावर्तकत्वासम्भवादिति पृच्छति। किमिदमनुभवत्वं नामेति। कारणवैलक्षण्यं तावद्भेदकमाह । प्रत्युत्पन्नेति । प्रत्युत्पन्नं प्रत्यग्रजातम् । ननु स्मृतावपि समानमेतत् तत्कारणसंस्कारस्यापि स्वोत्पत्तिकाले प्रत्यग्रत्वादित्याशङ्क्य एतदेव निर्ब्रूते । तदविदूरेति । तस्य कार्यभूतस्य योऽविदूरः प्राक्कालसन्निहितपूर्वक्षणः तत्रोत्पत्त्या नियतव्याप्तं तत्कालैकजन्यमित्यर्थः । स्मृत्यसमवायिकारणात्ममनःसंयोगनिरासार्थमसाधारणेत्युक्तम् । घटादिव्यभिचारवारणार्थं प्रत्ययपदं स्वोत्पत्तिसन्निहितपूर्वक्षणजन्यासाधारणकारणोत्थज्ञानत्वमनुभवत्वमित्यर्थः । स्मृतेरेतद्व्यतिरेकमभिव्यक्तुं तत्कारणं चाह । स्मृतेस्त्विति । संस्कारमात्रजन्यं ज्ञानं स्मृतिरित्यर्थः । मात्रपदेन प्रत्यभिज्ञादिव्युदासः। तत्र सन्निकर्षप्राधान्यात्। यथाहुः। अथ ग्रहणस्मरणयोः कियती सामग्री । अधिकार्थसन्निकर्षो ग्रहणस्य संस्कारमात्रसन्निकर्षः स्मरणस्येति। ननु प्रत्युत्पन्नसंस्कारोत्थस्मृतावतिव्याप्तिरित्याशङ्क्य तन्निरासार्थमेव नियतपदमित्याह । तस्येति । एतेनानुभवत्वं नामौपाधिकं सामान्यमित्युक्तम् । सम्प्रति मुख्यमेवास्तु ज्ञानत्वव्याप्यमित्याह । ज्ञानत्वेति । प्रमाऽप्रमावृत्तिज्ञानत्वसाक्षाद्व्याप्यसामान्यमनुभवत्वं पूर्वोक्तस्यैव व्यवस्था-

(१) प्रत्युत्पन्नेत्यादि नास्ति B पु· ।

तत्र प्रसक्तिः । ज्ञानत्वावान्तरजातिभेदो वा अनुभवत्वम् । स्मृतिव्यतिरिक्तज्ञानत्वं वेति ॥ २ ॥

साधनमाश्रयो वेत्युक्तमेवार्थं विषयविशेषव्यवस्थया प्रपञ्चयति ॥

**नित्यानित्यतया द्वेधा प्रमा नित्यप्रमाश्रयः ।**
**प्रमाणमितरस्यास्तु करणस्य प्रमाणता ॥ ३ ॥**

एवं च नित्यप्रमाश्रयत्वादीश्वरस्यापि प्रतितन्त्रसिद्धान्तसिद्धं प्रामाण्यमपि लक्षितं भवति । तदुक्तम् । आप्तप्रामाण्यादिति । तन्मे प्रमाणं शिव

---

पकमिति भावः । प्रमेतिस्मृतित्वसंशयत्वादिव्युदासः । अप्रमेति प्रमात्वादिनिरासः[१] । शेषं सत्तागुणत्वज्ञानत्वनिरासाय । साक्षात्पदेन परोक्षत्वादिव्यावृत्तिः । अथ रूढिर्वा गुरुमतवदित्याह । स्मृतिव्यतिरिक्तज्ञानत्वं वेति । न च स्मृतिरप्यनुभवव्यतिरिक्तेत्यन्योन्याश्रयता । स्मृतेः पूर्वज्ञानजसंस्कारमात्रजन्यत्वेन लक्षणे तदनपेक्षणादिति ॥ २ ॥

उत्तरश्लोकं पूर्वापौनरुक्त्येनावतारयति । साधनमाश्रयो वेति ।

नित्यप्रमाया आश्रय एव प्रमाणं तस्याः करणासम्भवात् । अनित्यायास्तु करणमेव प्रमाणम् । सम्भवेऽप्याश्रयस्य प्रमाव्याप्त्यभावादिति भावः । नित्यप्रमाश्रयप्रामाण्यकथनफलमाह । एवं चेति । तदलक्षणे सिद्धान्तविरोधं सूचयति । प्रतितन्त्रसिद्धान्तसिद्धमिति । स्वतन्त्रमात्रसिद्धमित्यर्थः । तत्र सूत्रसंवादमाह । तदुक्तमिति । मन्त्रायुर्वेद-

(१) व्युदासः–पा॰ E पु॰

इति च । अत्र प्रमासाधकतमं प्रमाणमित्यादीनि न्यायविदां लक्षणवचनानि लौकिकप्रमाणमात्रपराणि । अत एव हि प्रमातुरेवेश्वरस्य प्रमाविनाभावेन प्रामाण्यमुपपादयन्त आहुः ।

मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता ।

---

प्रामाण्यवत्तत्प्रामाण्यमाप्तप्रामाण्यादिति सूत्रे वेदप्रामाण्यं प्रतीश्वरप्रामाण्यस्याप्तप्रामाण्यादिति हेतुत्वेन सिद्धवदुपादानात् सिद्धमीश्वरप्रामाण्यमित्यर्थः । उदयनसंवादं चाह । तन्मे प्रमाणमिति । परोक्तलक्षणानां गतिमाहात्रेति । अकरणत्वेऽप्याश्रयत्वादेव प्रामाण्यमीश्वरस्य प्रमाव्याप्तेरित्युदयनाचार्यवचनं संवादित्वेनावतारयति । अत एवेति । करणप्रामाण्यनियमाभावादेवेत्यर्थः । प्रमाश्रयत्वेनैवास्य प्रामाण्यं न तु लौकिकवत् करणत्वेनेत्याह । प्रमातुरेवेति । अकरणत्वे कथं प्रामाण्यमत आह । प्रमाविनाभावेनेति । अत्र संवादः । तदयोगव्यवच्छेदः प्रामाण्यमिति । तस्याः प्रमाया अयोगोऽसम्बन्धः तद्व्यवच्छेदः प्रमाव्याप्तिरिति यावत् । तदेव प्रामाण्यं तच्चेश्वरस्यापि सम्भवत्येवेति भावः ॥

नन्वीश्वरस्य कुतः प्रमाव्याप्तिः तज्ज्ञानस्याकार्यत्वाफलत्वेनाप्रमात्वादित्याशङ्क्य प्रमाणलक्षणमाह । मितिः सम्यक्परिच्छित्तिरिति । अकार्यत्वे ऽपि सम्यगनुभूतित्वादीश्वरज्ञानं प्रमेति भावः । तथापि नेश्वरः प्रमाता नित्यप्रमां प्रति चाकर्तृत्वादित्याशङ्क्य प्रमातृलक्षणमाह । तद्वत्ता चेति । प्रमासमवायित्वं प्रमातृत्वं न तु कर्तृत्वमितीश्वरोऽपि प्रमातेति भावः । तर्हि नेश्वरः प्रमाणम् प्रमातृत्वकरणत्वयोर्विरोधादित्याशङ्क्य प्रमाव्याप्तं प्रमाणमिति

तदयोगाद्व्यवच्छेदः प्रामाण्यं गौतमे मते ॥ इति[1] ॥ ३ ॥

अथ स्फुटतरानल्पदोषतया तेषां स्वरूपव्याक्रियैव निराक्रियेति मन्वानः प्रावादुकानां प्रमाणलक्षणा[2]न्युपन्यस्यति ।

अविसंवादिविज्ञानं प्रमाणमिति सौगताः ।
अनुभूतिः प्रमाणं सा स्मृतेरन्येति केचन ॥ ४ ॥
अज्ञातचरतत्त्वार्थनिश्चायकमथापरे[3] ।
प्रमेयव्याप्यमपरे प्रमाणमिति मन्वते ॥ ५ ॥
प्रमा नियतसामग्री प्रमाणं केचिदूचिरे ॥

नो मतं न तु तत्करणमिति अतो न विरोध इत्याह । तद्योगेति । प्रमाश्रयत्वात् प्रमातृत्वं प्रमाव्यापत्वात् प्रमाणत्वं च । न चानयोर्विरोधः करणत्वेन प्रामाण्यं तु लौकिकविषये न च तत्राश्रयत्वमिति न कुत्रापि विरोधवार्तेति भावः । न चेन्द्रियलिङ्गादिचतुष्करणकोटिर्वनन्तर्भावादीश्वरस्य पञ्चमप्रमाणत्वप्रसङ्गः साक्षात्कारिप्रमाव्याप्तत्वेन प्रत्यक्षान्तर्भावादिति ॥ ३ ॥

अथ यदेतदविसंवादिविज्ञानमित्यादिना सार्द्धश्लोकद्वयेन परेषां लक्षणपञ्चकमुपन्यस्तं तदप्यप्रतिषिद्धत्वादनुमतमिति शङ्कां शमयंस्तदवतारयति । अथेति । प्रावादुकाः प्रवक्तारः वदतः पूर्वादुपसंख्यानादुकप्रत्ययः । अन्येषामपि दृश्यत इति पूर्वस्य दीर्घः ॥

अज्ञातचरोऽज्ञातपूर्वः । भूतपूर्वे चरट् इति ।

(१) न्यायकुसुमाञ्जलौ ४ स्तवके ५ कारिका ।
(२) लक्षणवचना–पा॰ C पु॰ ।
(३) अगृहीततथाभूतगोचरामपरे धियम्–पा॰ A पु॰ ।

तथागतमतानुवर्त्तिनो ह्यविसंवादिविज्ञानं प्रमाणम् अविसंवादश्चार्थक्रियास्थितिरिति लक्षयन्ति । तथाहुः ।

प्रमाणमविसंवादिज्ञानमर्थक्रियास्थितिः ।

अविसंवादनमिति । तदसत् । भूतभविष्यद्विषयेष्वनुमानेष्वव्याप्तेः । न ह्यसतोर्भूतभविष्यतोः काचिदर्थक्रिया नामास्ति(१) । स्मृतिज्ञानसविकल्पकज्ञानाभ्यां चातिव्याप्तेः । न हि ततः प्रवृत्तो विसंवाद्यते । विकल्पस्य(२) चाविसंवादानङ्गीकारे निर्विकल्पकस्यापि तन्न स्यात् । तद्द्वारकत्वात् तत्संवादनस्य ।

---

अविसंवादिविज्ञानमित्यत्राद्यं क्रियाध्याहारेण व्याचष्टे । तथागतेति । नन्वविसंवादिविशेषणमनर्थकं सर्वस्यापि विज्ञानस्य विज्ञानत्वे विसंवादाभावादित्याशङ्क्यार्थद्वारको विसंवादो दृष्टो न स्वरूपप्रतिबन्धन इत्यभिप्रेत्याह । अविसंवादश्चेति । अर्थक्रियासमर्थविषयत्वमविसंवादित्वमित्यर्थः । अत्र सौगतवाक्यं संवादयति । तथाहुरिति । तदेतद्दूषयति । तदसदिति । अव्याप्तिं तावदाह । भूतेति । कुत इत्याशङ्क्य त्वदुक्ताविसंवादासम्भवादित्याह । न हीति । अतिव्याप्तिं चाह स्मृतीति । तदेव स्फोरयति । न हीति । अभिमतविषयं स्मृत्वा विकल्प्य वा प्रवृत्तस्य विसंवादाभावादित्यर्थः । विकल्पस्याविसंवादानङ्गीकारात्नातिव्याप्तिरित्याशङ्क्याह । विकल्पस्येति । तदविसंवादनं कुतो न स्यादित्यत्राह । तद्द्वारकत्वादिति । सविकल्पकावि-

(१) अर्थक्रियास्थितिनामास्ति—पा० C पु ।
(२) सविकल्पकस्य च—पा C पु० ।

न च शुक्तिकारजतादिविकल्पनिदर्शनेन तस्य विसंवादः साधयितुं शक्यते । पक्षादिग्राहिभिरेव विकल्पैः सकललैङ्गिकविकल्पैश्चानैकान्त्यात् । तन्मिथ्यात्वे चाश्रयाद्यसिद्धिः प्रसज्येत । अनुमानप्रामाण्यमप्युत्सन्नसंकथमापद्येत । एतेनार्थजत्वमर्थविषयत्वमपि(१) अविसंवाद इति निरस्तम् । विकल्पस्यापि तथाभावेन प्रामाण्यप्रसङ्गात् । अथैवं मनुषे स्वलक्षणप्रभवनि-

संवादनप्रमाणकत्वाऽन्निर्विकल्पकाविसंवादनस्येत्यर्थः । विमतो विकल्पो विकल्पत्वाद् विसंवादी शुक्तिरजतविकल्पवदित्यनुमानं स्यादित्याशङ्क्याह । न चेति । कुत इत्यत आह । पक्षादीति । पक्षहेतुदृष्टान्तग्राहिविकल्पप्रामाण्ये तत्रैव विकल्पत्वहेतोरनैकान्तिकत्वं तदप्रामाण्ये हेत्वाद्यसिद्धिः स्यादित्यर्थः । किं चेत्थं प्रलपतो बौद्धस्य मूर्द्धनि भगवता बुद्धेनापि दुर्द्धर्षो महानयं वज्रपातः कृत इत्याह । अनुमानेति । विकल्पत्वाविशेषादिति भावः । उक्तदोषं पक्षान्तरे ऽप्यतिदिशति । एतेनेति । अर्थक्रियास्थितिलक्षणाविसंवादस्य विकल्पे ऽतिव्याप्तिकथनेनेत्यर्थः । साक्षात्स्वलक्षणप्रभवत्वमर्थजत्वम् अनारोपितार्थत्वमर्थविषयत्वमिति विवेकः । कथमन्यनिरासादन्यनिरास इत्याशङ्क्य दोषसाम्यादित्याह । विकल्पस्यापीति । विकल्पस्य प्रामाण्यप्रसञ्जकमाह । तथाभावेनेति । अर्थजत्वेनार्थविषयत्वेन चेत्यर्थः । अन्यथा प्रवृत्तिसंवादो न स्यातामिति भावः । ननु भ्रान्त्यैव प्रवृत्तिः अर्थक्रियासंवादस्तु यादृच्छिक इत्यप्रमाणमेव विकल्प इति नातिव्याप्तिरिति शङ्कते । अथैवमित्यादिना । अप्रामा-

(१) अर्थविषयत्वं वा—पा० B पु० ।

विकल्पकजन्मा तदारोपितार्थप्रतिभासश्च विकल्पः स्वलक्षणे पुरुषं प्रवर्तयति संवादयति च मणिप्रभाविषयमणिविकल्पन्यायेन, परम्परयार्थप्रतिबन्धात्[१] न त्वाहत्यार्थजत्वमर्थविषयत्वं वाऽस्यास्तीत्यप्रामाण्यमेवेति । तर्हि तत एवाप्रामाण्यमनुमानस्यापि स्यात्[२] । अथ वह्निस्वलक्षणाद्धूमस्वलक्षणं तस्मादनुभवः तस्माद्धूमविकल्पः ततो दहनविकल्प इति परम्परयार्थजत्वेनानुमानप्रामाण्यमभ्युपगम्येत । तर्हि

पयमित्यन्तेन । अप्रामाण्ये कारणमाह । न त्वाहत्येति । साक्षादर्थजत्वार्थविषयत्वयोरभावं व्यनक्ति । स्वलक्षणप्रभवनिर्विकल्पकजन्मेति । अर्थजप्रसूतोऽयं न तु स्वयमर्थज इत्यर्थः । नन्वनर्थजत्वेऽनर्थविषयत्वे वा कथमर्थावभासः तस्याप्यपह्नवे वा कथमस्मादर्थे प्रवृत्तिः संवादश्चेत्यत आह । तदारोपितार्थप्रतिभासश्चेति । नन्वारोपितार्थावभासात् प्रवृत्तिरस्तु शुक्तिरूप्यादिविकल्पवत्, संवादस्तु कथमत आह । मणिप्रभेति । यथा मणिप्रभायां मणिबुद्धेर्भ्रान्तत्वेऽपि मणिप्रभवप्रभाविषयतया परम्परया याथार्थ्यसम्बन्धादर्थक्रियासंवादो यादृच्छिको दृष्टः तथा विकल्पस्याप्यर्थजप्रत्यक्षप्रसूतेः पारम्पर्येणार्थसम्बन्धनियमादर्थक्रियासंवाद इत्यर्थः । तर्ह्यानुमानिकविकल्पेऽप्यव्याप्तिरित्याह । तर्हीति । तत एवाहत्यार्थजत्वाभावादेव अनुमानस्यानुमानिकविकल्पस्येत्यर्थः । अनुमानप्रतिबन्दिमोचनमाशङ्कते । अथेति । अनुभवः प्रत्यक्षनिर्विकल्पकमिति यावत् ।

(१) अर्थसम्बन्धात्-पा C पु॰

(२) तर्ह्यनुमानस्यापि प्रामाण्यं न स्यात्-पा C पु ।

तत एव विकल्पस्मृत्योरपि प्रामाण्यमभ्युपगच्छ । तत्रापि पारम्पर्यस्य सुवचत्वात् । एतेन बाधविरहोऽविसंवाद इति च प्रत्युक्तम् । न चावस्तुभूतसामान्यविषयत्वादप्रामाण्यं विकल्पस्य । अनुमानस्यापि तथाभावप्रसङ्गात् । ततश्चैतन्निरस्तम् । यथाहुः ।

विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लवः । इति ।

तथा ।

तस्यां यद्रूपमाभाति बाह्यमेकमिवान्यतः ।
व्यावृत्तमिव निस्तत्त्वं परीक्षानङ्गभावतः ॥ इति ।

---

तर्ह्यव्याप्तिं परिहरतः पुनः सैवातिव्याप्तिरावर्त्तते इत्यहो कष्टमायुष्मतः स्वभ्रादभ्रमध्ये प्रवेश इत्याह । तर्हीति । तत एव पारम्पर्येणार्थजत्वादेवेत्यर्थः । तत्र विकल्पस्यार्थजनिर्विकल्पकोत्पत्वादर्थजत्वम् । स्मृतेस्तु तादृग्विकल्पाहितसंस्कारप्रभवत्वादिति पारम्पर्येणार्थजत्वस्य सुवचत्वादित्यर्थः । अबाध्यत्वमविसंवादनमिति पक्षान्तरमाशङ्क्याह । एतेनेति । विकल्पे ऽतिव्याप्तिकथनेनेत्यर्थः । विकल्पस्यापि बाध्यत्वाभावातिव्याप्तिरित्याशङ्क्य किं तस्य बाध्यत्वमलीकसामान्यगोचरत्वात् । अशब्दात्मकस्यार्थस्य शब्दात्मकत्वेनावभासनाद्वेति द्वेधा विकल्प्याद्यं दूषयति । न चेति । कुत इत्याशङ्क्याबाध्यत्वस्यानुमानाव्याप्तेरित्याह । अनुमानस्यापीति । अनुमानस्यापि सामान्यगोचरत्वाविशेषादप्रामाण्यप्रसक्तेन सामान्यालीकत्वं युक्तमिति भावः । एतेन परेषां प्रलापाः परास्ता इत्याह । *ततश्चेति । सामान्यालीकत्वायोगादित्यर्थः ॥*

विकल्पः सविकल्पकम् उपप्लवो भ्रान्तिः कुतः अव-

**अनुमानेन समानयोगक्षेमत्वाद्विकल्पस्य । न चाशब्दात्मकस्यार्थस्य शब्दात्मनावभासान्मिथ्यात्वं विकल्पस्य । न हि घटोऽयमित्यस्यायमर्थो घटशब्दोऽयमिति किं तु घटशब्दवाच्योऽयमिति । यथाहुः ।**

---

स्तुनस्तुच्छस्य निर्भासात् तत्र वा स्वतन्त्रो हेतुः असंवादादिति । तस्यां विकल्पसंविदि ग्राह्यं विज्ञानातिरिक्तमिव एकमिव वस्तुनः परमाणुपुञ्जानतिरेकेऽप्यतिरिक्तमेकमाश्रितं स्थूलमिव तथा अन्यतो व्यावृत्तमिव व्यावर्तकसामान्यालीकत्वे ऽपि तत्कृतव्यावृत्तिविशिष्टमिव यद्रूपमाकारो भाति तन्निस्तत्त्वं तुच्छम् । कुतः परीक्षानङ्गभावतः विचारासहत्वादित्येतत्सर्वं पूर्वोक्तानुमानाप्रामाण्यप्रसङ्गादपास्तमित्यर्थः । द्वितीयं दूषयति । न चाशब्दात्मकस्येति । कुत इत्याशङ्क्य उक्तहेत्वसिद्धेरित्याह । न हीति । घटोऽयमिति घटशब्दवाच्यत्वावभासोऽयं न तु तत्तादात्म्यावभासः सामानाधिकरण्यनिर्देशसाम्यात्तु तादात्म्यावभासभ्रमो भवताम् । अन्यथाक्षादिशब्दश्रवणादेवनाद्यनेकार्थेष्वेकत्वावभासः घटादिमूर्तार्थेष्वमूर्तत्वावभासः यजेतेत्यादितिङन्तार्थेषु साध्यरूपेषु सिद्धरूपतावभासश्च स्यात् । सर्वस्यापि शब्दस्य निष्पन्नरूपत्वाविशेषादिति भावः ।

माभूत् तादात्म्यावभासः तथापि सञ्ज्ञायाः स्मर्यमाणविशेषणतया[1] पारोक्ष्यात् तद्विशिष्टसञ्ज्ञिविकल्पस्यापि पारोक्ष्यापत्तौ प्रत्यक्षत्वबाधः[2] स्यादिति शङ्कां वृद्धसंवादमुखेन परिहरति । यथाहुः सञ्ज्ञा हीत्यादि । यद्यपि प्रतिः

---

(१) घटशब्दवाच्योऽयमिति निर्विकल्पकज्ञाने वाच्यवाचकभावानुस्मृतिः ।

(२) घटस्य यत् प्रत्यक्षत्वं तस्य बाधः स्यादित्यर्थः ।

सञ्ज्ञा हि स्मर्यमाणापि प्रत्यक्षत्वं न बाधते ।
सञ्ज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा ॥ इति ।

( इति बौद्धवादप्रकरणम् ) ।(१)

प्राभाकरास्तु अनुभूतिः प्रमाणम् । स्मृतिव्य-

सम्बन्धिसञ्ज्ञिनिर्विकल्पकोद्बोधितसंस्कारोत्थस्मृतिपथप-थिकतया परोक्षैव सञ्ज्ञा तथापि सञ्ज्ञिनो घटादेर्विकल्प्य-मानस्य(२) प्रत्यक्षत्वं न बाधते परोक्षतां नापादयतीत्यर्थः । पराकृत इत्याशङ्क्य तदशक्तेरित्याह । न रूपाच्छादनक्षमेति । सञ्ज्ञिनः प्रत्यक्षत्वतिरोधानाशक्तेरित्यर्थः । अशक्तौ हेतु-माह । सा तटस्था हीति । हि यस्मात् सा सञ्ज्ञा तटस्था स्मृति-द्वारा इन्द्रियस्य स्वसम्प्रयुक्तसञ्ज्ञिविकल्पजनने सहकारि-त्वेन सन्निहिता न तु समबलत्वेनेति यावत् । अन्यथा स्मृतिसम्प्रयोगयोस्तुल्यबलत्वे मिश्रकार्योत्पत्तौ परोक्षत्वा-परोक्षत्वसङ्करप्रसङ्गः । तस्मात् पूर्वकालतास्मृतिः प्रत्य-भिज्ञायामिव सञ्ज्ञास्मृतिरपीन्द्रियसहकारितया न सञ्ज्ञि-विकल्पे प्रत्यक्षतां बाधते । यथा सुरभि चन्दनमित्यादौ घ्राणजन्या गन्धबुद्धिरिन्द्रियान्तरसहकारिणी गन्धविशि-ष्टचन्दनविकल्पस्य चाक्षुषत्वं स्पार्शनत्वं वा न विरुन्धेत् तद्वदिति सुष्ठूक्तं तटस्थेति ।

अथ प्राभाकरीयं प्रमाणसामान्यलक्षणं दूषयितुमु-पन्यस्यति । प्राभाकरास्त्विति । अनुभूतिः प्रमाणमित्यत्र भावसाधनोऽयं प्रमाणशब्दः । येयमिन्द्रियलिङ्गादिजन्या संवित् सानुभूतिरनुभवः । सा सर्वा प्रमाणं प्रमिति-

(१) ( ) एतन्मध्यस्थो नास्ति B पु० ।

(२) सविकल्पविषयस्य ।

तिरिक्ता[1] संविदनुभूतिः । स्मृतिश्च संस्कारमात्रजं ज्ञानमिति वर्णयन्ति । यथाहुः ।

प्रमाणमनुभूतिः सा स्मृतेरन्या स्मृतिः पुनः ।
पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ॥ इति ।

तत्र तावत् प्रमाणलक्षणे प्रथमाध्याये वेदाप्रामाण्यवादिनो बौद्धादीन् प्रति वेदवाक्यजनितस्य ज्ञानस्य स्वतः प्रामाण्यं प्रसाध्येदानीं स्मृतिव्यव-

---

रित्यर्थः । तस्याश्च हानादिव्यवहारानुगुणत्वात् स एव फलम् । यदा त्विन्द्रियतत्सन्निकर्षादेः प्रमाणत्वं विवक्षितं तदा प्रमाणशब्दः करणसाधनः अनुभूतिः फलमिति च द्रष्टव्यम् । तदुक्तं शालिकायां प्रमाणफलविभागप्रस्तावे ।

मानत्वे संविदो भाव्यं हानादानादिकं फलम्[2] ।
ज्ञानस्य तु फलं सैव व्यवहारोपयोगिनी ॥ इति ।

ज्ञानस्य ज्ञानकरणस्येन्द्रियादेरित्यर्थः । न च स्मृतावतिव्याप्तिरित्याह । स्मृतीति स्मृतिव्यतिरेकज्ञापनाय । तामपि लक्षयति । स्मृतिश्चेति । संस्कारपदेनेन्द्रियलिङ्गादिजन्यज्ञानव्यवच्छेदः मात्रपदेन त्ववधारणार्थेन प्रत्यभिज्ञाव्यावृत्तिः । तत्र सम्प्रयोगस्यापि करणत्वादिति ।

अथ शालिकासंवादमाह । यथाहुरिति । तदेतत्तुरगाधिरूढस्य तुरगविस्मरणम् यद्वेदप्रामाण्यसाधने प्रवृत्तस्य मीमांसागुरोस्तत्प्रमाद इति सोपहासं परिहरति ।

तत्र तावदिति । तावच्छब्द एतद्दोषसूचनार्थः । कथं तत्प्रमाद इत्याशङ्क्य स्वोक्तप्रमाणलक्षणस्य प्रकृतवेदप्रा-

(१) स्मृतेरन्या च-पा B पु ।

(२) संविदो मानत्वे हानादानादिकं फलं भाव्यमित्यन्वयः ।

च्छेदेनानुभूतित्वलक्षणं प्रामाण्यं प्रसाध्यत इति महदिदं व्याख्यानकौशलमायुष्मताम् । किं च स्मृतिज्ञानानामात्मस्वात्मनोरभिमतं प्रामाण्यं न सिध्येत् स्मृतीनां स्मृतिव्यतिरिक्तत्वासम्भवेनाननुभूतित्वात् । त्रितयप्रकाशरूपायास्तस्या वेद्यांश एव संस्कारजनितत्वेन स्मृतित्वं न त्वंशान्तरयोरिति चेत् न तयोः

---

कथाव्याप्त्यनवेक्षणादित्याह । प्रमाणेत्यादि । वाक्यजन्यस्य ज्ञानस्यानुभूतित्वेन प्रामाण्यं तज्जनकवाक्यस्यातल्लक्षणत्वादप्रामाण्यं दुर्वारमिति भावः । तावच्छन्दसूचितं दूषणान्तरं च प्रस्तौति । किं चेति । द्विविधं हि विज्ञानं प्रमाणं स्मरणं च । तदुभयमपि पात्रप्रदीप इवात्मानमाश्रयतया स्वात्मानं स्वप्रकाशत्वेन विषयतया बाह्यं चावभासयतीति त्रिपुटीप्रत्यक्षतामाचक्षते गुरवः । तत्रात्मस्वात्मांशयोरुभयं प्रमाणं प्रत्यक्षं च वेद्यांशो स्मरणमप्रमाणमप्रत्यक्षं च । अनुभवं तु पञ्चविधमपि(१) प्रमाणमेव तद्यथायथं प्रत्यक्षमप्रत्यक्षं चेति मन्यन्ते । तत्र स्मार्तयोरात्मस्वात्मांशयोः प्रमाणाभिमतयोरनुभूतिलक्षणमव्याप्तमित्याह । स्मृतिज्ञानानामिति । असिद्धौ कारणमाह । स्मृतीनामिति । आत्मस्वात्मांशयोरपीति शेषः । स्मृतिप्रयोजकसंस्कारजत्वाभावेन स्मृतित्वाभावादात्मस्वात्मांशयोः स्मृतिव्यतिरिक्तत्वं व्याप्तमिति शङ्कते । त्रितयेति । तत्रापि तत्प्रयोजकसम्भवादव्याप्तिस्तदवस्थेति परिहरति । न तयोरिति । नन्वस्त्येव कारणान्तरं तयोस्तत्रैव(२) यदन्यदात्ममनःसंयो-

---

(१) प्रत्यक्षादीनि चत्वारि अर्थापत्तिश्चेति पञ्चविधम् ।

(२) तयोरात्मस्वात्मांशावभासयोः कथं स्मृतौ ।

संस्कारजनितत्वाभावे कारणान्तरं वाच्यम् । न हि सर्वसंविदां विषयप्रकाशांशकारणव्यतिरेकेण कारणान्तरं दृष्टमिष्टं वा । यथोक्तं प्राभाकरतन्त्रसागरपारदृश्वना शालिकानाथेन ।

सर्वविज्ञानहेतूत्था मितौ मातरि च प्रमा ।
साक्षात्कर्तृत्वसामान्यात् प्रत्यक्षत्वेन सम्मता ॥ इति ।

---

गादिकमित्याशङ्क्याह । न हीति । स्मृत्यादिषड्विधज्ञानेष्वपि संस्कारसम्प्रयोगादिविशेषयोगिन्यात्ममनःसंयोगादिसामग्री हि विषयप्रकाशांशे कारणं सैवात्मस्वात्मां[illegible]

[illegible]

तथाभावप्रसङ्ग(२) इत्यर्थः । अन्यथा प्रमाणविरोधस्वाभ्युपगमविरोधौ स्यातामित्याशयेनाह । दृष्टमिष्टं वेति । उक्तः प्रमाणविरोधः । [illegible]

स्वाभ्युपगमं दर्शयति । यथोक्तमिति । मेये त्विन्द्रिययोगोत्थेत्युक्त्वोच्यते । सर्वेत्यादि । येयं जगति ग्रहणस्मरणात्मिका संवित् सा सर्वापि मितौ स्वात्मांशे मातर्यात्मांशे च सर्वैः समग्रैरेव विज्ञानहेतुभिः संस्कारसम्प्रयोगादिभिरुत्थिता न तु सामग्र्येकदेशेनेत्यर्थः । सा च प्रमा प्रमाणमेव किं च यथा मेयांशं साक्षात्कुर्वन्ती प्रत्यक्षा भवति एवमात्मस्वात्मांशयोरपि साक्षात्कर्तृत्वसाम्यात् प्रत्यक्षा च किं तु मेयमात्रंशयोस्तदतिरिक्ता मित्यंशे तु मितेरव्यतिरिक्तेति विशेष इति शालिकार्थः । तथादा-

---

(१) स्मृतित्वग्रहणत्वादि ।

(२) कुर्वद्रूपत्वं कुर्वद्रूपत्वम् ।

संविदन्तरानपेक्षस्वोत्पत्तिकत्वम् अनुभूतित्वम्

**एतेन स्वोत्पत्तौ संविदन्तरानपेक्षत्वमनुभूतित्वमित्यपास्तम् । पूर्वोक्तसकलदोषानतिवृत्तेः । अपि च सविकल्पकप्रत्यक्षस्यानुमानादीनां च संविदन्तरापेक्षोत्पत्तित्वेनाननुभूतित्वात्[1] तत्प्रामाण्यं न स्यात् । स्वसमानविषयसंविदन्तरानपेक्षत्वमभिमत-**

---

त्मस्वात्मांशयोरपि स्मृतेः संस्कारजत्वाविशेषात् तत्रानुभूतित्वमव्याप्तमिति सिद्धम् । एवं परेषां कण्ठोक्तमनुभूतिलक्षणं निरस्य सम्प्रति सम्भावितानि लक्षणान्तराण्यपि निरसिष्यन् स्वोत्पत्तौ संविदन्तरानपेक्षा संविदनुभूतिरिति पक्षं तावदतिदेशेन निरस्यति । एतेनेति । कण्ठोक्तलक्षणनिरासेनेत्यर्थः । अत्रापि स्वोत्पत्ताविंत्यादिविशेषणात् स्मृतिव्यावृत्तिः । कुतो निरस्तमित्याशङ्क्य पूर्ववद्वेद्यवाक्येषु विशेष्याव्याप्तेः स्मार्तगोरात्मस्वात्मांशयोर्विशेषणाव्याप्तिश्चेत्याशयेनाह । पूर्वोक्तेति । अन्यत्रापि विशेषणाव्याप्तिं समुच्चिनोति । अपि चेति । निर्विकल्पकलिङ्गशब्दसदृशवस्त्वनुपपद्यमानार्थज्ञानसापेक्षत्वात् निर्विकल्पकव्यतिरिक्तप्रत्यक्षादिप्रमितिपञ्चकस्यापि अप्रामाण्यप्रसङ्ग इत्यर्थः । अनन्तरोक्तदोषनिरासाय लक्षणं विशिनष्टि । स्वसमानेति । स्वोत्पत्तावित्येव सविकल्पकादीनां निर्विकल्पकादिसापेक्षत्वेऽपि तत्समान[2]विषयत्वाभावान्न तेष्वव्याप्तिः । स्मृतिस्तु स्वोत्पत्तौ स्वसमानविषयपूर्वानुभवसापेक्षत्वान्न तत्रातिव्याप्तिश्चेत्याशङ्कितुराशयः । तथापि लैङ्गिकशाब्दयोरव्याप्तिर्विमर्शेऽतिव्याप्तिश्च

---

(१) अननुभूतित्वे-पा B पु ।

(२) तेन निर्विकल्पकादिना समानम ।

मिति चेत् । तर्हि व्याप्तिग्राहकप्रमाणानधिकविषयमनुमानमित्यभ्युपगमात् शाब्दस्य स्वसमानविषयविमर्शापेक्षत्वाङ्गीकाराच्च तयोरनुभूतित्वं न स्यात् स्याच्च विमर्शस्येत्यात्मीय एव बाणो भवन्तं प्रहरति । अथार्थपरिच्छेदलक्षणे स्वकार्ये स्वसमानविष-

---

स्यातामिति परिहरति । तर्हीति । व्याप्तिग्राहकं प्रमाणं नाम यत्रेदं तत्रेदमिति लिङ्गलिङ्गिनोर्निरुपाधिकसम्बन्धग्राहकं प्रत्यक्षादि । तदुक्तम् ।

> यः कश्चिद्येन यस्येह सम्बन्धो निरुपाधिकः ।
> प्रत्यक्षादिप्रमासिद्धः स तस्य गमको मतः ॥ इति ।

विमर्शस्तु शब्दप्रमाणानुग्राहकस्तर्करूपः स्मृतिविशेषः । नन्वस्य स्मृतित्वं कथं स्वोत्पत्तौ स्वसमानविषयसंविदन्तरानपेक्षत्वं तथात्वे वा कथं स्मृतित्वमतस्तत्रातिव्याप्तिवाचो युक्तिर्नातीव युक्तिमतीति चेत् सत्यम् तस्य सापेक्षत्वे ऽपि स्मृतिप्रमोषवदनुभूतविषयत्वाभिमानाभावादनपेक्षत्ववाचो युक्तिः शब्दानुमानयोः स्वसमानविषयविमर्शादिसापेक्षत्वाभ्युपगमलक्षणं स्वचेष्टितमेव स्वस्य बाधकं जातमित्याशयेनाह । आत्मीय एवेति । अथ शाब्दलैङ्गिकयोः स्वोत्पत्तौ विमर्शादिसापेक्षत्वे ऽपि स्वकार्ये तदभावात्तथा विशेषणे व्यापकं लक्षणमिति शङ्कते । अथेति । तत्र स्वकार्यमर्थपरिच्छेदोऽर्थव्यवहारश्चेति द्वयमस्ति । तत्र तावदाद्यमवलम्ब्येनाह । अर्थपरिच्छेदेति । किं परिच्छित्तिः परिच्छेद इति भावसाधनोऽयं शब्द उत परिच्छिद्यतेऽनेनेति परिच्छेद इति करणसाधनो वेति द्वेधा विकल्प्याद्ये इन्द्रियलिङ्गादिकरणफलस्य संविदः स्वातिरिक्तपरिच्छेदाभावात्

यसंविदन्तरानपेक्षत्वमिति चेत् न स्वव्यतिरेकेण स्वकार्यस्य परिच्छेदान्तरस्याभावात् । भावे वा स्मृतिरपि तथा स्यात् । तस्या अपि स्वोत्पत्तावेव परापेक्षा नार्थपरिच्छेदे । अर्थव्यवहारः संवित्कार्य इत्यभ्युपगमे ऽपि तथा शब्दानुमानयोरिव स्मृतेरपि वेद्यव्यवहारहेतुत्वे पारतन्त्र्याभावात् । भावे वा स्मृतेरात्मस्वात्मनोरपि तथाभावेनानुभूतित्वं न स्यात् । तयोरंशयोः सर्वसंवित्साधारणत्वेन परानपेक्षत्वमिति

स्वस्यैव स्वकार्यत्वे आत्माश्रयणाल्लक्षणमसम्भवि स्यादित्याशङ्क्याह [१]। न स्वेति। द्वितीये स्मृतावतिव्याप्तिरित्याह। भावे वेति। कुत इत्यत आह। तस्या अपीति। अर्थपरिच्छेद इति। हेयत्वादिज्ञानरूपकार्य इत्यर्थः। व्यवहारपक्षावलम्बे ऽप्ययमेव दोष इत्याह। अर्थेति। अत्रापि व्यवहारशब्दो भावार्थः करणार्थो वेति विकल्प्याद्ये पूर्ववदात्माश्रयस्य[२] स्फुटत्वाद् द्वितीये स्मृतावतिव्याप्तिमतिदिशति। तथेति। कथं तथेत्यत आह। शब्देति। यथा शाब्दलैङ्गिकयोरुत्पत्तावेव संविदन्तरापेक्षा नार्थव्यवहारकार्ये तद्वत्स्मृतेरपीति तत्रातिव्याप्तिरित्यर्थः। अथातिव्याप्तिपरिहाराय स्मृतेर्वेद्यव्यवहारे ऽपि सापेक्षत्वमुच्येत तर्हि आत्मस्वात्मांशयोरपि तथात्वात् तयोरव्याप्तिः स्यादित्यहो कष्टमेकं सन्धित्सतो ऽपरं प्रच्यवस इत्याह। भावे वेति। अथात्मस्वात्मांशयोः सकलसापेक्षज्ञानसाधारणत्वेनानपेक्षत्वाभ

(१) इत्याशयेनाह—पा॰ E पु॰।

(२) इन्द्रियलिङ्गादिकरणफलस्य संविदः स्वातिरिक्तस्वकार्यव्यवहाराभावात् स्वस्यैवार्थव्यवहारत्वे आत्माश्रयः।

चेत् न ग्रंथान्तरस्यापि साधारणत्वात् । न चात्मस्वात्मव्यवहारसमर्थत्वेन जातायाः संविदो वेद्यव्यवहारसामर्थ्यं हेत्वन्तरेण पश्चाद्भवतीति वाच्यम् । कार्यगतशक्तीनां कार्यकारणादेव कार्येण सहोत्पत्तेः । अन्यथा विरम्यव्यापारप्रसङ्गात् । न च बुद्धिशब्दकर्मणामनावृत्तानां विरम्यव्यापार उपपद्यते । स्वसमा-

---

तयोरव्याप्तिरिति शङ्कते । तयोरिति । तर्हि वेद्यांशस्यापि तथात्वात् तत्रातिव्याप्तिरिति सेयमुभयतः पाशारज्जुरायुष्मत इति परिहरति । नेति । न त्वात्मस्वात्मव्यवहारजनने सहजशक्तियुक्तत्वात् तत्रानपेक्षैव संविद् वेद्यव्यवहारजनने त्वागन्तुकशक्तिकत्वात् तत्र तत्संविदन्तरसापेक्षेति न क्वाप्यव्याप्तिरतिव्याप्तिर्वेति शङ्कामनूद्य शकलयति । न चेति । कुतो न वाच्यमित्याशङ्क्य स्वस्वाकाराधेय[1]शक्तीनां सर्वसंविदामागन्तुकशक्त्ययोगाद्वेद्यांशेऽपि स्मृतेरनपेक्षत्वेनातिव्याप्तिरित्याह । कार्येति । आगन्तुकशक्तिवादे ऽनिष्टमाह । अन्यथेति । सहजागन्तुकशक्तिकार्ययोः क्रमेण करणं विरम्यव्यापारः । इष्टापत्तिं परिहरति । न चेति । ननु वीणादिशब्दस्य क्रमिकानेकज्ञानजनकत्वात् तज्ज्ञानस्य च क्रमिकानेकसुखव्यक्तिजनकत्वात् कर्मणश्चेषुादेः क्रमिकानेकाकाशादिदेशसंयोगविभागजनकत्वाचास्त्येव शब्दबुद्धिकर्मणां च विरम्यव्यापार इत्याशङ्क्याह । अनावृत्तानामिति । असन्तन्यमानानामित्यर्थः । तथा च तेषामेकसन्तानवर्त्तिनामनेकेषामेव क्रमकारित्वं न त्वेकस्यैव विरम्यव्यापृतिरिति भावः । लक्षणा-

---

(१) स्वस्वलक्षणाधेय–पा॰ E पु॰ ।

नव्यवहारहेतुसंविदन्तरानधीनोत्पत्तित्वमनुभूतित्व-
मिति चेत् । तर्हि स्मृतिज्ञानस्य वेद्यांशे ऽप्यनुभूति-
त्वापत्तिः । न हि तदितिव्यवहारस्य पूर्वानुभव-
कार्येणेदमितिव्यवहारेण समानविषयत्वम् । एकस्य
वर्तमानकालावच्छिन्नवस्तुविषयत्वात् अतीतानुभव-
कालावच्छिन्नवस्तुविषयत्वाच्चान्यस्य । अन्यथा द्वयो-
रपि समानविषयत्वेन तत्तेदन्ताव्यवहारसङ्करप्रस-
ङ्गात् । शब्दानुमानयोरपि विमर्शाद्यपेक्षत्वेन वेद्यै

---

न्तरमाशङ्कते । स्वसमानेति । स्मृतेरात्मस्वात्मांशयोरी-
दृक्संविदन्तरानपेक्षत्वाद्वेद्यांशे तदपेक्षत्वाच्च नाव्याप्तिरि-
त्याशयः । माभूदव्याप्तिरतिव्याप्तिस्तु न शक्रेणापि शक्यते
वारयितुमित्याह । तर्हीति । कुत इत्याशङ्क्य तत्तेद-
न्ताव्यवहारयोरसमानविषयत्वादित्याह । न हीति ।
ननु तदिदंशब्दपरामृष्टार्थस्यैकत्वात् कथं विषयभेद इत्या-
शङ्क्य विशेषणकालभेदाद्भेद इत्याह । एकस्येति । अनुभव-
कार्यस्येदमितिव्यवहारस्येत्यर्थः । अन्यस्येति । स्मृतिकार्यस्य
तदितिव्यवहारस्येत्यर्थः । नथापि विषयभेदानङ्गीकारे दण्ड-
माह । अन्यथेति । तच्छब्दादिदमर्थे प्रवृत्तिरिदंशब्दाच्च तदर्थे
प्रवृत्तिरुभाभ्यामुभयत्र वा प्रवृत्तिरुभयोः पर्यायतापत्तिश्च
स्यादिति सङ्करार्थः । अव्याप्तिं चाह । शब्देति । अतिव्या-
प्त्यन्तरमाह । भवेच्चेति । कुत इत्याशङ्क्य तत्रोक्तलक्षणसं-
क्रमादित्याह । स्वसमानेति । विमर्शस्य स्मृतिरूपत्वादी-
दृक्पूर्वानुभवसापेक्षत्वे ऽपि स्मृतिप्रमोषवत् तथाभिमाना-
भावादनपेक्षत्ववाचो युक्तिः । अथान्यथालक्षणमाशङ्कते ।

नानुभूतित्वं भवेद् भवेच्च विमर्शस्य स्वसमानव्यवहारहेतुसंविदन्तरानपेक्षत्वात् । स्वहेतुसंविदन्तरानवच्छिन्नार्थविषया संविदनुभूतिरिति चेत् । तर्हि स्मृतिप्रमोषे वेद्ये ऽप्यनुभूतिः स्यात् । वक्तृज्ञानानुमिते ऽर्थे लौकिकवाक्यजन्यस्य वेदे ऽपि य एवं विद्वानित्याद्यनुवादवाक्यजन्यस्य[1] च ज्ञानस्यानुभूतित्वं

स्वहेत्विति । माभूदेवं स्मृतिवेद्यांशे ऽतिव्याप्तिः स्मृतिप्रमोषवेद्यांशे ऽतिव्याप्तेः कः प्रतीकार इत्याह । तर्हीति । इदं रजतमित्यादिविभ्रमस्थलेऽख्यातिपक्षे नैकमिदं विज्ञानं किं त्विदमितीन्द्रियादिदोषवशादगृहीतशुक्तित्वादिविशेषपुरोवर्तिद्रव्यमात्रग्रहणं रजतमिति तु दोषप्रमुषिततत्तांशस्मरणं स स्मृतिप्रमोष इत्युच्यते । तस्य वस्तुनः स्वहेतुसंविदन्तरावच्छिन्नार्थत्वे ऽपि तथाभिमानाभावात् तदभाव इत्यनुभूतित्वापत्तिरित्यर्थः । अव्याप्तिं चाह । वक्तृज्ञानेति । वक्तृज्ञानावच्छिन्नार्थानुमानकाले ऽनुमित[2] इत्यर्थः । विषयघटितस्यैव ज्ञानस्यानुमेयत्वादिति भावः । गुरुमते सर्वत्र गामानयेत्यादिषु वाक्येषु वाक्यश्रवणानन्तरमेतद्वाक्यार्थज्ञानवानयं वक्ता एतद्वाक्यप्रयोक्तृत्वात् यो यद्वाक्यं प्रयुङ्क्ते स तस्यार्थं वेद यथाहम् । अन्यथा तत्प्रयोगायोगादित्यनुमित एवार्थे वाक्यं बोधकमित्युच्यते । किं च वेदे ऽपि य एवं विद्वानमावास्यां यजते य एवं विद्वान् पौर्णमासीं यजत इति विद्वद्वाक्याभ्यामाग्नेयादिपट्वाक्यावगत एव यागषट्के त्रिकद्वयानु-

(१) सन्निमय–पा॰ C पु॰ ।

(२) वक्तृज्ञानानुमानकाले ऽनुमित–पा॰ E पु॰ ।

न स्यात् । स्याच्च विमर्शस्यानुभूतित्वेन प्रामाण्यम् । किं चात्र सर्वत्रापि पीतशङ्खादिविभ्रमाः प्रमाणं भवेयुः । तत्र रूपरूपिणोर्निरन्तरभानमात्रेण सामानाधिकरण्यप्रतीतिमपलपतो बहिष्कार एव प्रामाणि-

---

वादेन ज्ञानं जन्यते तत्रोभयत्रापि स्वहेतुसंविदन्तरानवच्छिन्नार्थविषयत्वाभावादव्याप्तिः स्यादित्यर्थः । पुनश्चातिव्याप्तिमाह । स्याच्चेति । अथोक्तसकलपक्षसाधारणी[1]-मतिव्याप्तिमाह । किं चात्रेति । सर्वत्रापि स्मृतिव्यतिरिक्तस्यैव संविदः प्रामाण्ये प्रयोजकत्वोक्तेस्तस्य पीतशङ्खादिविभ्रमेष्वपि सम्भवात् तेष्वतिव्याप्तिरित्यर्थः । आदिशब्दाच्छुक्तिरजतादिसङ्ग्रहः । ननु सति कुड्ये चित्रकर्म तथाहि दोषच्छन्नधवलिम्नः शङ्खमात्रस्यागृहीताश्रयसम्बन्धस्य पित्तपीतिम्नश्च गृह्यमाणयोरेवासंसर्गाग्रहात्[2] तथा शुक्तिरजतादौ च विषयेन्द्रियमनोदोषमहिम्ना शुक्तिस्वतत्त्वांशतिरोधानेन पुरोवर्तिरजतमात्रयोर्ग्रहणस्मरणाभ्यामेव भेदाग्रहाच्च विनापि विभ्रमं विपरीतव्यवहार[3]-सिद्धेर्निराश्रयो व्यभिचारो दुर्वच इत्याशङ्क्याह । तत्रेति । रूपरूपिणोरिति । शङ्खपीतिम्नोरित्यर्थः । इदं च धर्मारोपोदाहरणम् रजतादिधर्म्यारोपस्याप्युपलक्षणम् । निरन्तरभानमात्रेणेति । पूर्वोक्तप्रकारेणाधिष्ठानारोप्ययोर्यथायथमसंसर्गाग्रहणं भेदाग्रहेण वा यद्भानं तन्निरन्तरभानं तन्मात्रेणेत्यर्थः । सामानाधिकरण्यप्रतीतिमन्यथाख्यातिमित्यर्थः । बहिष्कार इति । प्रमाणमिद्धार्थापह्नोतुरमामा-

---

(१) अनुभूतिः प्रमाणं सेत्युक्तानाम् ।
(२) विद्यमानोऽप्यसंसर्गो दोषात् न गृह्यते ।
(३) अयथार्थव्यवहारः ।

कैः करणीय इति । एतेन साक्षात्प्रतीतिः प्रत्यक्षमिति तेषां प्रत्यक्षलक्षणमपि निरस्तम्[१] । यथाहुः ।

साक्षात्प्रतीतिः प्रत्यक्षं मेयमातृप्रमासु सा । इति ।

न तावत् त्वन्मते गुणस्य सतो ज्ञानस्य

---

णिकत्वं स्यादित्यर्थः । विमतः शङ्खः पीतज्ञानगोचरः पीतव्यवहारविषयत्वात् हरिद्रादिवदिति तु प्रमाणमन्यथाख्यातौ । तदेवं प्राभाकरीयं प्रमाणसामान्यलक्षणं पराणुद्य सम्प्रति तन्मतस्यातिफल्गुत्वप्रकटनार्थमप्रस्तावेऽपि तदीयं प्रत्यक्षलक्षणमपि पराणुदति । एतेनेति । सामान्यलक्षणप्रतिक्षेपेणेत्यर्थः । तथाहि साक्षात्प्रतीतिरित्यत्र प्रतीतिशब्देन किं संविन्मात्रमुच्यते अनुभूतिर्वा । आद्ये भावनाप्रकर्षपर्यन्तजस्मृतौ साक्षात्कारवत्यामतिव्याप्तिः स्यात् । द्वितीये तु पूर्ववत् [२] स्मार्तयोरात्मस्वात्मांशयोः प्रत्यक्षाभिमतयोरव्याप्तिरिति ॥

अथ लक्षणांशे शालिकासंवादमाह । यथाहुः साक्षात्प्रतीतिरिति । साक्षात्कारिण्यनुभूतिः प्रत्यक्षमित्यर्थः । अन्यथा पूर्वोक्तस्मृतिविशेषे ऽतिव्यापनात् लैङ्गिकादिव्युदासाय साक्षाद्विशेषणं मेयेत्यादि तु विषयप्रदर्शनपरम् । तत्र विशेष्यदूषणमतिदेशग्रन्थे गतमिति साक्षाद्विशेषणं दूषयिष्यन् किमिदं साक्षात्त्वं नाम मुख्यमेव ज्ञानत्वावान्तरसामान्यं वा भूतत्वादिवत् किञ्चिदौपाधिकं सामान्यं वेति द्वेधा विकल्प्याद्ये लक्षणमसम्भवीत्याह । न तावदिति । साक्षात्त्वजात्यभावे कार-

---

(१) परास्तम्-पा॰ B. पु॰ ।

(२) अनुभूतिः प्रमाणमित्यादिवत् ।

साक्षात्त्वं नामावान्तरजातिरस्ति । गुणानामवान्तरजात्यनभ्युपगमात् । न च तद्व्यतिरेकेण साक्षात्त्वमिति किञ्चित् सम्भवति । तथाहि तत् किं प्रतीतेः प्रतीत्यन्तराव्यवहितेन्द्रियजत्वम्[१] १ स्वविषये प्रतीत्यन्तराव्यवहितत्वं वा २ स्वकालाकलितवस्त्ववभासित्वं वा ३ पदार्थस्वरूपविषयत्वं वा ४ सजातीयविजातीयसमस्तवस्त्वन्तरव्यावृत्तवस्तुस्वरूपविषयत्वं वा ५ वस्त्वन्तरप्रतीतिनिरपेक्षस्वगृहीतभेदवशेन दृष्टसमस्तवस्त्वन्तरव्यावृत्तवस्तुव्यवहारोत्पादनशक्तत्वं वा[२] ६ इदमहं जानामीति त्रितयव्यवहारानुगुणत्वं वा ७ किञ्चिद्धर्मान्तरं वा ८ ।

---

णमाह । गुणानामिति । रूपरसादीनां सर्वत्र गोघटादिष्वेकाकारावभासादेकव्यक्तिकत्वेनावान्तरजात्यभाव इति तेषां समयः । ननु माभूद् गुणानामवान्तरजातिः ज्ञानस्य किमिति नास्तीत्याशङ्क्य तस्यापि गुणत्वादित्याह । गुणस्य सत इति । ज्ञानस्यापि तन्मते सर्वत्रैकत्वादिति भावः । द्वितीये त्वसम्भव इत्याह । न चेति ।

अस्म्भवमेवाभिव्यक्तुमपृथा साक्षात्त्वं विकल्पयति तथाहि तत् किमित्यादिना । यदेतत् प्रतीतेः साक्षात्त्वं तत् किमिति सर्वविकल्पशेषत्वेन योज्यम् । अनुभवव्यवधानेनेन्द्रियजत्वं स्मृतेरपीति तन्निरासार्थमुक्तं प्रतीत्यन्तराव्यवहितेति । शेषं चोदनाजन्यप्रतीतिनिरासार्थम् । एवं विकल्पान्तरेष्वपि यथायथं विशेषणफलमर्थाश्च तत्तन्नि-

---

(१) जन्यत्वम्-पा॰ C पु॰ ।
(२) शक्तिमत्त्व वा-पा॰ C पु॰ ।

तत्र न प्रथमः कल्पः[१] । अनुमानादिसंविदां स्वात्मात्मनोरप्रत्यक्षत्वप्रसङ्गात्[२] ।

न द्वितीयः । चोदनाजनितायाः संविदो वेद्ये ऽपि प्रत्यक्षतापातात् । सापि विमर्शव्यवहितेति चेत् । तर्हि विमर्शस्य वेद्ये ऽपि प्रत्यक्षत्वप्रसङ्गात्[३] ।

---

रासदशायामेव सूत्प्रेक्ष्याः प्रेक्षावद्भिरित्युपेक्ष्यन्ते विस्तरभयात् । किञ्चिद्धर्मान्तरं वेति पूर्वोक्तसप्तभङ्गिव्यतिरिक्तमित्यर्थः ।

तत्राद्यमव्याप्त्या दूषयति । न प्रथम इति । व्याप्त्यादिज्ञानान्तरितलिङ्गादिजन्यत्वादनुमित्यादीनामात्मस्वात्मांशयोः प्रत्यक्षाभिमतयोरुक्तलक्षणमव्याप्तमित्यर्थः ।

अथोक्तदोषपरिजिहीर्षया द्वितीयपक्षावलम्बे सोऽप्यतिव्याप्तिहत इत्याह । न द्वितीय इति । तत्र स्वविषय इति विशेषणात् प्रागुक्ताव्याप्तिनिरासः । अनुमानादिसंविदामप्यात्मस्वात्मविषये वेद्यांशवत् प्रतीत्यन्तरापेक्षाविरहादिति । चोदना विधिवाक्यम् । चोदना चोपदेशश्च विधिश्चैकार्थवाचिन इति कारिकोक्तेः । तज्जन्यबुद्धे[४]रत्यन्तापूर्वार्थगोचरत्वेन स्वविषये वेद्ये ऽपि संविदन्तरायोगात् तत्रेदं लक्षणमतिव्याप्तमित्यर्थः । उक्तातिव्याप्तिपरिहाराय परः शङ्कते । सापीति । विमर्शो व्याख्यातः । तदेतदङ्गीकृत्यान्यत्रातिव्याप्तिमाह सिद्धान्ती । तर्हीति । तत्रापि

---

(१) कल्प-इति नास्ति B पु॰ ।
(२) प्रत्यक्षत्वापातात्—पा॰ B पु॰ ।
(३) प्रत्यक्षत्वं स्यात्—पा॰ B पु॰ ।
(४) चोदनाजन्यबुद्धेः ।

प्रमाणत्वे सतीति विशेषयिष्याम इति चेत् । तर्ह्युपमानस्य[1] प्रत्यक्षत्वप्रसङ्गः ।

न तृतीयः । अनुमानादावपि तथाभावप्रसङ्गात् । स्वकाले सत एवार्थस्यावभासकत्वनियम इति चेत् । न अत्रायं नियमो नान्यत्रेति विवेक्तुमशक्यत्वात् । यत्र विषयस्य ज्ञानं प्रति हेतुत्वं तत्रायं नियमः ।

प्रतीत्यन्तरव्यवधानकल्पनायामनवस्था स्यादिति भावः । अत्र विशेष्यप्रतीतिशब्देनानुभूतित्वस्य विवक्षितत्वाद् विमर्शस्य चास्मन्मते स्मृतावन्तर्भावान्न तत्रातिव्याप्तिरिति शङ्कते । प्रमाणत्व इति । तर्ह्युपमितावतिव्याप्त्या स्वस्थो भवेत्याह । तर्ह्युपमानस्येति । अनेन सदृशी सा गौरिति पुरोवर्तिप्रतियोगिकपरोक्षवस्तुनिष्ठसादृश्यज्ञानस्य स्वविषयप्रतीत्यन्तराव्यवहितत्वादिति भावः ।

अथैतत्कल्पानिर्वाहनिर्वेदात् तृतीयकल्पाश्रवणे सोऽपि तथेत्याह । न तृतीय इति । कुत इत्याशङ्क्य किं तत्र स्वकालाकलितत्वं नाम वस्तुनः स्वकाले सत्त्वं वा स्वकालविशिष्टत्वं वा । आद्ये स्वकाले सतोऽप्यवभासकत्वं स्वकाले सत एवेति द्वेधा विकल्प्याद्ये त्रैकालिकार्थावभासिन्यनुमानादावतिव्याप्तिरित्याह । अनुमानादावपीति । तथाभावः सतोऽप्यवभासकत्वम् । द्वितीयमाशङ्कते । स्वकाल इति । ज्ञानकाल इत्यर्थः । सत एवेति । वर्तमानस्यैवेत्यर्थः । गूढाभिसन्धिरुत्तरमाह । नेति । अत्र प्रत्यक्षे । अन्यत्रानुमानादौ । विवेक्तुं नियन्तुमित्यर्थः । अज्ञातपराशयः परो नियामकमाशङ्कते । यत्रेति । यस्मिन् प्रमाण

(१) ग्रेऽपि—रत्यधिकम् C पु० ।

असतो ज्ञानं प्रति हेतुत्वायोगादिति चेत् । एवं सति सर्वसंविदां स्वात्मन्यप्रत्यक्षत्वप्रसङ्गः । स्वात्मनि स्वस्य हेतुत्वायोगात् स्वविषयत्वानभ्युपगमाच्च । स्वकालविशेषितार्थावभासित्वमिति चेत् । तर्हि निर्विकल्पकस्य सर्वसंविदां स्वात्मात्मनोरप्रत्यक्षत्वापातः ।

न चतुर्थः । तत्र यदि वस्तुस्वरूपं साक्षादित्यु-

---

इत्यर्थः । ज्ञानं प्रति हेतुत्वमेव अत्र नियामकं तच्च प्रत्यक्ष एव सम्भवति नान्यत्रेति भावः । अन्यत्रासम्भवे कारणमाह । असत इति । भूतभाव्यनुमानादिविषयभूतार्थस्य तत्कालासत्त्वेन हेतुत्वादित्यर्थः । अथ सिद्धान्ती प्रव्यक्ताभिसन्धिरव्याप्त्या दूषयति । एवं सतीति । कुत इत्याशङ्क्य स्वोक्तनियामकाभावादित्याह । स्वात्मनीति । विषयत्वादेव हेतुत्वमित्याशङ्क्य तदपि नास्तीत्याह । स्वविषयत्वेति । तदभ्युपगमे त्वात्माश्रयः स्यादिति भावः । विशिष्टपक्षमाशङ्कते । स्वकालेति । अत्राप्यव्याप्तिमाह । तर्हीति । निर्विकल्पकस्याविशिष्टविषयत्वाद् ज्ञानात्मनोः स्वमते विषयतयानवभासाच्च(१) तेषु कालविशिष्टार्थावभासकत्वमव्याप्तमित्यर्थः ।

अथ चतुर्थपक्षोपन्यासोऽपि व्यर्थ इत्याह । न चतुर्थ इति । कुतो नेत्याशङ्क्य यदेतत्प्रतीतेः साक्षात्त्वं नाम पदार्थस्वरूपविषयत्वमित्यात्थ तत् किं पदार्थमात्रस्वरूपविषयत्वं साक्षाद्भूतपदार्थस्वरूपविषयत्वं वा । आद्ये ऽनुमानादावतिव्याप्तिरित्यास्तां तत् । द्वितीये तु साक्षाद्भूतपदार्थ एव स्वरूपमात्मा तद्विषयत्वं वा उत साक्षाद्भूतप-

---

(१) विषयत्वानवभासाच्च-पा॰ E पु॰ ।

त्मा तद्विषया संवित् साक्षादित्य[1]भिधीयते । ततः प्रत्यक्षसमानविषया स्मृतिरपि तथा स्यात् । यदि स्वस्य रूपं स्वरूपमिति जात्यादिधर्मभेदप्रतीतिः । तर्ह्यनुमानादेरपि तथात्वं प्रसज्येत । यदा स्वस्यैव

---

दार्थे यत् स्वरूपमित्यनवधारितषष्ठीसमासाश्रयणात् तन्निष्ठसामान्यादिसाधारणधर्मस्तद्विषयत्वं वा अथवा स्वस्यैव रूपमित्यवधारणात् तन्निष्ठासाधारणधर्मस्तद्विषयत्वं वा स्वमेव रूपमिति सावधारणकर्मधारयाश्रयणान्नामाद्यविशिष्टापरोक्षवस्तुविषयत्वं वा यद्वा स्वरूपशब्दस्य प्रतीत्यन्तरसंस्पर्शनिषेधपरत्वमाश्रित्याज्ञातचरसाक्षाद्भूतवस्तुविषयत्वं वेति पञ्चधा विकल्प्याद्यमनुवदति। तत्र यदीति। साक्षात्त्वस्य विषयधर्मतामाह । वस्तुस्वरूपं साक्षादित्युक्तयेति । सर्वविकल्पशेषं चैतत् । अत्र वस्त्वेव स्वरूपमात्मेति विग्रहार्थः स्वरूपशब्दश्चात्र रूढवृत्तिः। तथा च साक्षाद्भूतपदार्थस्वरूपविषयत्वं[2] साक्षात्त्वमित्यर्थः । एतत्प्रत्यक्षानुभवजन्यस्मृतावतिव्याप्तमित्याह । तत इति । द्वितीयमनुवदति । यदि स्वस्येति । आदिशब्दात् संख्यादिसंग्रहः । अत्र प्रतीतेः साक्षाद्भूतवस्तुनिष्ठसाधारणधर्मविषयत्वं साक्षात्त्वमित्यर्थः। अस्य धूमानुमानादावतिव्याप्तिरित्याह । तर्हीति । अत्रादिशब्दात् स्मृतेरपि संग्रहः । तृतीयमनुभाषते । यदा स्वस्यैवेति । साक्षाद्भूतवस्तुनिष्ठासाधारणधर्मविषयत्वं साक्षात्त्वमित्यर्थः । इदं तावदयं स्वरो मत्पुत्रीयः विशिष्टस्वरत्वात् पूर्वानुभूतैत-

---

(१) साक्षात्प्रतीतिरित्य–पा॰ C पु॰ ।

(२) वस्तुविषयत्व पा॰ E पु॰ ।

रूपं स्वरूपमित्यसाधारणधर्मप्रतीतिः[1] तदा पुत्रादिस्वराद्यनुमाने ऽतिव्याप्तिः[2] न व्याप्नोति च साधारणधर्मदर्शनम् । अथ स्वयमेव रूपं स्वरूपं रूप्यते ऽनेन संविदिति च रूपम् । तेन या स्वरूपेण स्वात्मना वस्तु विषयीकरोति सा साक्षात्प्रतीतिः नैवमनुमानादिरिति चेत् । तर्हि सविकल्पकस्याप्रत्यक्षत्वप्रसङ्गः[3] । तत्र नामादिरूपेण विषयीकरणात् ।

स्वविषयान्तर्गतप्रतीत्यन्तराव्यवहितत्वं स्वरू-

---

त्स्वरदेवेत्याद्यसाधारणधर्मानुमाने ऽवतिव्याप्तमित्याह । तदा पुत्रादीति । आदिशब्दाद्भ्रात्रादिसंग्रहः । स्वरादीत्यादिशब्दादुद्देशभाषादिसंग्रहः । अथ सङ्ख्यादिसाधारणधर्मप्रत्यक्षेष्वव्याप्तिश्चेत्याह । न व्याप्नोति चेति ।

चतुर्थमाशङ्कते । अथ स्वयमेवेति । नन्वेकस्यैव कथं धर्मधर्मिभाव इत्याशङ्क्य रूपशब्दं च निरुक्तिभेदेन धर्मिपरत्वेन व्याचष्टे । रूप्यत इति । तथा च रूपमिति निरूपकमित्यर्थः । फलितमाह । तेनेति । स्वरूपशब्दस्य पूर्वोक्तनिरुक्तिसिद्धार्थमाह । स्वात्मनेति । अविशिष्टाकारेणेति यावत् । इत्थम्भावे तृतीया । तथा च यद्वस्तु यथाभूतं तत्तथैवोल्लिखति न तु विशिष्टमित्यर्थः । एतेन नामाद्यविशिष्टसाक्षाद्भूतवस्तुविषयत्वं साक्षात्त्वमिति सिद्धम् । तथा च पूर्वोक्तातिव्याप्तिर्निरस्तेत्याह । नैवमिति । अनुमानस्य विशिष्टविषयत्वादिति भावः । तर्हि मूले कुठार इत्याह । तर्हीति ।

(१) धर्मभेदप्रतीति.–पा० C पु० ।
(२) चातिव्याप्नोति–पा० B पु ।
(३) प्रसक्ति०–पा० B पु० ।

तस्य तेन सह तुल्यदर्शनयोग्यत्वादिति । न च दृश्यत इति तर्केणानुज्ञायमानं घटाभावं निश्चाययतीति । एवं स्वर्गकामो यजेतेत्यत्र समानपदोपात्तत्वाद्भाव्यत्वाच्च धात्वर्थः साध्यो भवतु भवतु वा पुरुषा-

र्थः । तर्कस्वरूपमाह । यदीत्यादि । अथ शब्दे ऽपि तर्कप्रवृत्तिप्रकारमाह । एवं स्वर्गेत्यादि अवधारयतीत्यन्तेन सन्दर्भेण । ननु व्युत्पन्नस्याकाङ्क्षासन्निधियोग्यतावत्पदकदम्बकश्रवणसमनन्तरमेव निर्विचिकित्सवाक्यार्थप्रतिपत्तौ कस्तर्कस्यावकाश इत्याशङ्क्य स्वर्गकामाधिकरणविचारोपन्यासेनावकाशं दर्शयति । स्वर्गकाम इत्यादि । तत्र स्वर्गकामो यजेत पशुकामो यजेतेत्यादौ प्रत्ययार्थभूताया भावनायाः किं धात्वर्थो भाव्यः उत स्वर्ग इति संशयः कृतः तत्र पूर्वपक्षवचनव्यक्तिमाह । धात्वर्थः साध्यो भवत्विति । साध्यो भाव्य इत्यर्थः । तत्र हेतुमाह । समानपदोपात्तत्वादिति । एकपदरूपश्रुतिगम्यत्वादित्यर्थः । स्वर्गस्तु पदान्तरोपात्तो वाक्यगम्यसम्बन्धः वाक्याच्च श्रुतिर्बलीयसीति भावः । हेत्वन्तरमाह । भव्यत्वाच्चेति । भवतीति भव्यो जन्यः कार्य इति यावत् । भव्यगेयेत्यादिना कर्तरि निपातनात् साधुः । तथाभूतं भव्यायोपदिश्यत इति न्यायात् स्वर्गेण यागं कुर्यादिति भव्ययागसिद्धये भूतस्वर्गादिद्रव्यं साधनत्वेनोपदिश्यते न तु यागेन स्वर्गं भावयेदिति भूतस्वर्गपश्वादिद्रव्यसिद्धये भव्ययागोपदेशो युक्तः । तदुक्तम् ।

भूतं च स्वर्गपश्वादि द्रव्यं भव्याय कर्मणे ।
विधीयते न भूताय भव्यकर्मोपदेशनम् ॥ इति ।

र्थत्वात् स्वर्ग इति संशये तर्कावतारः । यदि साध्यो धात्वर्थः स्यात् तदोपदेष्टुराप्तत्वं विधेश्चेष्टाभ्युपायत्वं प्रेक्षावतां प्रवृत्तिश्च व्याहन्येत । अस्ति चैतत् सर्वं प्रमाणतः सिद्धमिति तर्केणानुगृह्यमाणः शब्दः स्वर्गमेव

---

स्वर्गशब्दश्च लोके स्रक्चन्दनादिषु प्रयोगाद् द्रव्यवचनः कर्मिश्च साधनकामानुवादः । तेन भव्यत्वात् कार्यत्वाद् धात्वर्थ एव भाव्यो भावनायाः किमंशपूरक इति पूर्वपक्षवचनव्यक्त्यर्थः । पुस्तकेषु तु भाव्यत्वाद् दीर्घः पाठः प्रामादिकः उक्तार्थस्याकरस्यस्यैवानेनाभिधानात् साध्याविशिष्टत्वाच्चेति(१) । अथ सिद्धान्तवचनव्यक्तिं चाह । भवतु चेति । स्वर्गस्यैव भाव्यत्वे हेतुमाह । पुरुषार्थत्वादिति । तथाहि पदश्रुतेर्बलीयस्या विधिश्रुत्या प्रवर्तनात्मिकया प्रवृत्तिरूपा भावना धात्वर्थसम्बन्धात् प्रागेवावरुद्धा सती कथं कर्मियोगादवगतपुरुषार्थभावं प्रवृत्तियोग्यं स्वर्गमवधूय केवलक्लेशात्मकमपुरुषार्थं वा धात्वर्थं भाव्यत्वेनावलम्बिष्यत इति स्वर्ग एव भाव्य इति सिद्धं वचनव्यक्त्यर्थः । एवं समानपदोपात्तत्वपुरुषार्थत्वाभ्यां भाव्यसन्देहे तदवधारणाय तर्कः शब्दे लब्धावकाशो भविष्यतीत्याह । इति संशय इति । तर्हि स तर्को वाच्य इत्यपेक्षायां तर्कत्रयमाह । यदीत्यादिना । यद्यपुरुषार्थो धात्वर्थो भाव्यः स्यात् तदोपदेष्टुराप्तत्वमाप्तोपदेशात्मकस्य विधेरिष्टसाधनज्ञानोपायत्वमात्मनः प्रेक्षावत्प्रवृत्तिविषयत्वं च व्याहन्यादित्यर्थः । तर्काणां विपर्यये पर्यव-

---

(१) साध्यभाव्ययोः पर्यायत्वाच्च ।

भावनाफलत्वेनावधारयति ज्योतिष्टोमेन स्वर्गं भावयेदिति । एवमन्यत्राप्यन्यथासिद्धिनिरसनादिरनुग्रह[1]स्तत्रतत्र दर्शयितव्यः । तस्मात् साधूक्तं प्रमाणानुग्राहकस्तर्क इति । अत एव प्रमाणानामनुग्राहकस्तर्कस्तत्त्वज्ञानाय कल्पत इति भाष्यम् । प्रमाणविषयविभागात् तु प्रमाणानुग्राहक इति च वार्त्तिकम् । अनुजानन्ननुगृह्णातीति टीकापि । अन्वयव्यतिरेकविषये भूयोदर्शनसाहाय्यकमाचरन्ननुग्राहकस्तर्क इत्यात्मतत्त्वविवेकश्च । ननु तर्कस्याहार्यलिङ्गजन्यत्वेन

---

सानमाह । अस्ति चेति । फलितमाह । इति तर्केणेति । भावनाफलत्वेन भाव्यत्वेनेत्यर्थः । अथोपमानादावपि तर्कानुग्राहकत्वमतिदिशति । एवमिति । पञ्चपादिप्रमाणवाद्यभिप्रायेण तत्रतत्रेति वीप्सा । उपमानफलस्य मानान्तरसाध्यत्वे तत्प्रकरणोक्तदोषापत्तिरिति तर्केणान्यथासिद्धिनिरासः । आदिशब्दाद् विषयाभ्यनुज्ञानसंग्रहः । परमप्रकृतमुपसंहरति । तस्मादिति । तर्कस्य प्रमाणानुग्राहकत्वे पक्षिलादिसम्मतिमाह । अत एवेत्यादि । विषयविभागाद् विषयविवेकादित्यर्थः । अनुजानन्ननुगृह्णातीति । विषयाभ्यनुज्ञानमेवानुग्रह इत्यर्थः । उदयनोक्तप्रमानानुग्राहकत्वमप्युपलक्षणं मत्वाह । अन्वयव्यतिरेकेति । अनुमानजीवितव्याप्तिग्राहकप्रमाणोपयोगित्वमेव तदनुग्राहकत्वमित्यर्थः । स्वयमप्रमाणस्य कथं प्रमाणानुग्राह-

---

(१) रूपोनुग्रह–पा· B पु· ।

विपर्ययरूपस्य कथं प्रमाणानुग्राहकत्वमिति चेत् । नैवम् । अनिष्टापादकत्वेनानियतेच्छाविच्छेदकत्वनियमात् । यथा सविषान्नभक्षणेच्छायां यदि भक्षयिष्यसि तदा मरिष्यसीत्यनिष्टापादनेन भक्षणेच्छाविच्छेद इत्यनुभवसिद्धमिति न सङ्कटं किञ्चिदत्रेति ।

निर्णयलक्षणमाह ।

**निर्णयस्तर्कमानाभ्यामर्थतत्त्वावधारणम् ॥ ७५ ॥**

---

कत्वमिति प्रत्यवतिष्ठते । नन्विति । ननु दुष्टेन्द्रियाद्यजन्यस्य कथं विपर्ययत्वमित्यत्राह । आहार्येति । बुद्धिपूर्वारोपोऽपि मिथ्येति भावः । न चायमनवधारणात्मकत्वात् संशय एवेति वाच्यम् अग्न्यभावे धूमो न स्यादेवेत्यवधारणात् समानधर्मादिकारणाभावाच्चेति सन्तोष्टव्यम् । कात्र कथं वा न हि दृष्टेऽनुपपन्नं नामेति समाधत्ते । नैवमिति । अनिष्टप्रसञ्जनद्वारा सर्वत्रानियतेच्छाविच्छेदलक्षणानुग्रहनियमस्याप्यनुभवसिद्धत्वादित्यर्थः । कुत्रानुभूतस्तत्राह । यथेति । तस्माद्यथा स्वप्नदर्शनस्यायथार्थस्यापि यथार्थभाविशुभाशुभसूचकत्वं तथा तर्कस्यापि स्वयमप्रमाणस्यापि प्रमाणानुग्राहकत्वं नानुपपन्नमित्युपसंहरति । इति न सङ्कटं किञ्चिदत्रेति । इति तर्कपदार्थः ॥

ननूत्तरार्द्धे निर्णयस्तत्त्वावधारणमिति पर्यायकीर्तनं पुनरुक्तिरित्याशङ्क्य लक्ष्यलक्षणभावान्न दोष इत्याह । निर्णयेति । तर्कफलत्वात् तर्कानन्तर्यमस्येति चोत्क्रमेव स्मर्तव्यम् ।

**प्रमाणतर्काभ्यां स्वपरपक्षसाधनोपालम्भविमर्शपूर्वको यथार्थाध्यवसायो निर्णयोऽत्राभिमतः। परीक्षासाध्यमर्थावधारणं निर्णय इत्याचार्याः। तदुक्तम्। विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति ॥ ७५ ॥**

**अथ कथालक्षणमाह ।**

ननु तत्त्वावधारणमित्येतावदेव लक्षणमस्तु किं तर्कमानाभ्यामिति विशेषणेनेत्याशङ्क्य व्याचष्टे। प्रमाणतर्काभ्यामिति। यः प्रमाणतर्काभ्यां स्वपक्षसाधनपरपक्षोपालम्भपूर्वको विमर्शपूर्वकः संशयोपमर्दक इति यावत् यथा स्थाणुरेवायमित्यादि स एव निर्णयपदार्थाभिमतो नान्यो यथार्थोऽपीत्यर्थः। तेन घटाद्यवधारणव्युदासान्न विशेषणवैयर्थ्यमिति भावः। यथार्थेति सर्वायथार्थज्ञानव्युदासः। अर्थव्युदासाय प्रत्यय इति वक्तव्ये स्फुटार्थमध्यवसाय इत्युक्तम्। तद्व्यावर्त्यस्य यथार्थानध्यवसायस्य व्याघातहतत्वादिति। अत्रोदयनसम्मतिमाह। परीक्षासाध्यमिति। परीक्षा तर्कमानाभ्यां विचारो विमर्श इति यावत्। तत्साध्यमिति। अत्र सूत्रसम्मतिमाह। विमृश्येति। पक्षप्रतिपक्षाभ्यां स्वपक्षसाधनपरपक्षोपालम्भाभ्यामित्यर्थः। इति निर्णयपदार्थः ॥ ७५ ॥

ननूद्देशक्रमाद्वादलक्षणे वक्तव्ये किमन्यदनुद्दिष्टमेवोत्तरश्लोके कथ्यत इत्याशङ्क्य वादादीनां त्रयाणां कथावान्तरभेदत्वात् प्रथमं कथासामान्यलक्षणं कथयतीत्याह। कथेति। नन्वेवं चेत् कथैव त्रिविधाप्येकः पदार्थ इति पदार्थन्यूनत्वापत्तिः अन्यथा वादादिवत् प्रमाणादिपदार्थावान्तरभेदानामपि पृथक्पदार्थत्वे तदतिरेक इत्युभयथापि षोडशैव पदार्था इति नियमभङ्ग इति चेत् सत्यम्

**विचारविषयो नानावक्तृको वाक्यविस्तरः ।**
**कथा तस्याः षडङ्गानि प्राहुश्चत्वारि केचन ॥७६॥**

विचारगोचरार्थविषयो नानावक्तृको वाक्यविस्तरः कथा । तस्याः कथायाः षडङ्गानि सङ्गिरन्ते । निरूप्यनिरूपकनियमः कथाविशेषव्यवस्था वादिप्रतिवादिनियमः सदस्यानुविधेय[1]संवरणम् निग्रहस्थानसामस्त्यासमस्त्योद्भावनप्रतिज्ञानम्

तथापि वादस्य निःश्रेयसौपयिकतत्त्वाध्यवसायहेतुत्वाज्जल्पवितण्डयोश्च तत्संरक्षणार्थत्वात् निःश्रेयसार्थिनां प्रत्येकमेव प्राधान्येनोपादेयत्वज्ञापनाय तेषां पृथक्पदार्थत्वेनोद्देशः प्रमाणादीनां त्वेतच्छेषत्वेनोपादेयत्वान्न तथात्वम् न च तद्विशेषवसच्छेषत्वमप्येकपदार्थत्वप्रयोजकमिति मन्तव्यम् तन्त्रान्तरे गुणादीनां द्रव्याभेदप्रसङ्गादिति सङ्क्षेपः ।

ननु विचारो विमर्शस्तद्विषयत्वं कथायां न सम्भवतीत्यसम्भवि लक्षणमित्याशङ्क्य श्लोके विचारशब्दस्य विचार्यत इति कर्मसाधनव्युत्पत्त्या विचार्यार्थपरत्वान्नायं दोष इति व्याचष्टे । विचारगोचरार्थेति । क्रमात्पदत्रयेण कलहवाक्यपञ्चावयवप्रयोगकथावाक्यस्थपदानां व्युदासः । तत्र षडङ्गानि दर्शयति । निरूप्येत्यादि । निरूप्यं प्रतिपाद्यमात्मतत्त्वादिकं निरूपकं तत्प्रतिपादकं प्रमाणमनुमानादि तयोर्नियमः अनेनेदं साधयामीति प्रतिज्ञानं कथाविशेषो वादादिः तस्य व्यवस्था अनेन कथयिष्यामीति नियमकरणम् तथानयोरयं वादी प्रतिवादीति नियमो नियमनम् अनु पश्चाद्विधेयं निष्पन्नकथाक-

(१) सभ्या-पा॰ B पु॰ ।

कथापर्यवसानसंवित्तिरिति षडङ्गानि । अपरे तु चत्वारि । वादिप्रतिवादिनियमौ सदस्यानुविधेय(१) संवरणे चेति । लिपिकरणव्यवहारेषु लेखकोऽपि कश्चिदुभयसंमतो वरणीयः । अत्र कथकौ विद्यातः सम्भावितसाम्यौ स्याताम् । अन्यथा विशेषविज्ञानप्रयोजनायाः कथाया आनर्थक्यप्रसङ्गात् । वादमन्तरेणापि विशेषनिर्णयोपपत्तेः । सदस्यास्तु वादिप्रति-

लप्रतिपादनरूपमस्यास्त्यनुविधेयः सभापतिः तस्य सभ्यानां च संवरणमेते सभ्या अयमनुविधेय इति सम्परिग्रहः निग्रहसामस्त्यं जल्पवितण्डयोर्वादे त्वसामस्त्यमिति । एतच्च निग्रहान्ते स्फुटीभविष्यति। कथापर्यवसानस्य कथासमाप्तसंवित्तिपक्षादौ क्वचिदेकत्र समाप्तिरिति समयबन्धः । अथ चतुरङ्गानि दर्शयति । वादीत्यादि । वादिनियमः प्रतिवादिनियमः सभ्यसंवरणमनुविधेयसंवरणं चेति चत्वार्यङ्गानि । अन्यत् सर्वं तन्नान्तरीयकत्वान्न पृथग्वाच्यमिति भावः। अत्र पक्षद्वये ऽपि पाक्षिकमङ्गान्तरमाह । लिपिकरणेति । अथ वादिप्रतिवादिनोस्तुल्यबलत्वमावश्यकमित्याह । अत्रेति । ननु तुल्यत्वं दुर्ज्ञानमत आह । सम्भावितेति । अतुल्यत्वे बाधकमाह । अन्यथेति । कथमानर्थक्यं वादं विना निर्णयानुपपत्तेरित्याशङ्क्याह । वादमिति । पुरुषगौरवादेव श्रद्दधानस्य तदुपदेशमात्रादपि निर्णयसिद्धेरिति भावः। सभ्यलक्षणं तत्संख्यानियमं चाह । सदस्यास्त्विति । संख्यावैषम्यस्य प्रयोजनमाह । द्वैधेति ।

(१) सभ्यानुविधेय–पा॰ B पु॰ ।

वादिसम्मताः सिद्धान्तद्वयरहस्यवेदिनो रागद्वेषविरहिणः पराभिहितग्रहणधारणप्रतिपादनकुशलास्त्र्यवरा विषमसंख्याः स्वीकार्याः । तथा च सति द्वैधे बहूनां संवादेन निर्णयः स्यात् । तथा च स्मरन्ति ।

रागद्वेषविनिर्मुक्ताः सप्त पञ्च त्रयोऽपि वा ।
त्रयोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥ इति ।

द्वैधे बहूनां वचनमिति च । सदस्यानां तु प्रमेयविशेषस्य कथाविशेषस्य वादिप्रतिवादिनोश्च नियमनं पर्यनुयोज्योपेक्षणोद्भावनादिना कथकगुणदोषावधारणम् भग्नप्रतिबोधनं मन्दस्यानुभाष्य प्रतिपादन[1]मिति कर्माणि । सभापतिरपि वादिप्रतिवादिनोः सदस्यानां च सम्मतो रागादिरहितो निग्रहानुग्रहसमर्थः स्वीकरणीयः । तस्य च निष्पन्नकथाफलप्रतिपादनादिकं कर्म । वादे तु दैवादागताः सदस्या वादिप्रतिवादिभ्यां सम्प्रतिपत्त्या प्रामा-

अत्रोभयत्रापि संवादमाह । रागेत्यादि । यज्ञसदृशीति । यज्ञीयसभासदृशीत्यर्थः ।

सभ्यकृत्यमाह । सदस्यानां त्विति । अथ सभापतिलक्षणमाह । सभापतिरपीति । तत्कृत्यं चाह । तस्येति । निष्पन्नकथाफलप्रतिपादनं वादिप्रतिवादिभ्यां मिथः पणीकृतद्रव्यदापनम् । आदिशब्दात् स्वयं छत्रचामरादिदानम् । वादे विशेषमाह । वादे त्विति । दैवादागतानां

(१) प्रमाण-पा॰ C पु॰ । प्रदान-पा॰ B पु॰ ।

दिककथाभासशङ्काव्यावर्तनायाङ्गीक्रियन्त न जल्पवितण्डयोरिव प्रमेयादिव्यवस्थापनार्थमङ्गत्वेनोपादीयन्ते । तथा च वार्त्तिकम् । न चायं नियमः प्राश्निकप्रत्यायनार्थ एवायं वाद इति । प्राश्निकानन्तरेणापि गुर्वादिभिः सह संवादो दृष्ट इति । अत्र टीका न वादे प्राश्निकानामुपादानं दैवादागतानां त्ववर्जनमिति[१] । यत्पुनः प्राश्निका वादे न सन्तीति तस्यैव वचनम् अङ्गतयोपादानं नास्तीति तस्यार्थः दैवादागतानामवर्जनस्य स्वयमेवोक्तत्वादिति ॥ ७६ ॥

वा किं प्रयोजनमत आह । प्रामादिकेति । बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेत इति न्यायादिति भावः । वादे सभ्यस्वीकारनियमाभावे वृद्धसंवादमाह । तथा चेति । ननु गुर्वादीनामेव प्राश्निकत्वात् कथं नियमाभाव इत्याशङ्क्य तेषामपि दैवादागतानामेव स्वीकारो न तु नियमादिति तात्पर्यटीकायां व्याख्यातं वाचस्पत्याचार्यैरित्याह । अत्र टीकेति । ननु दैवादागतास्तत्रैव प्रतीयन्ते इत्याशङ्क्याह । यत्पुनरिति । कथमयं टीकार्थो निश्चित इत्याशङ्क्यावर्जनवचनान्यथानुपपत्तेरित्याह । दैवादिति ॥ ७६ ॥

इह पदार्थानां सौत्रक्रमेणैवोद्देशक्रममाश्रित्य प्रमाणादिपदार्थाश्चेल्लक्ष्यन्ते इति लक्षणमात्रस्यैव प्रतिज्ञातत्वादुत्तरार्द्धे संग्रहकृतां वादादिपदार्थत्रयोद्देशः प्रतिज्ञाविरुद्धः सौत्रेण पुनरुक्तश्च इत्याशङ्क्य सत्यम् कथासामान्यलक्षणानन्तरं वादादीनां तदवान्तरभेदत्वाभिधानपरतोद्दे-

(१) न वर्जनमिति—पा॰ B पु॰ ।

कथावान्तरविधा दर्शयति ।

**वादो जल्पो वितण्डेति तिस्रस्तस्या विधा मताः ।**

तत्र वादस्य लक्षणं फलं च दर्शयति ।

**तत्र प्रमाणतर्काभ्यां साधनाक्षेपसंयुता ॥ ११ ॥**

**वीतरागकथा वादस्तत्फलं तत्त्वनिर्णयः ।**

प्रमाणतर्काभ्यामेव स्वपक्षसाधनपरपक्षोपालम्भौ करणीयावित्यभिमानमात्रमत्र विवक्षितं न[1] वस्तुतः उभयोरपि तथा कर्तुमशक्यत्वात् । यथाहुः । प्रामाणिकवचनमात्राभिप्रायपूर्विका कथा वाद इति ।

---

शपरमित्याशयेनाह । कथावान्तरेति । एवं पदार्थन्यूनताशङ्का तु प्रागेव निरस्तेत्यास्तां तावत् ।

उत्तरश्लोके पादत्रयेणैव वादलक्षणाच्चतुर्थपादवैयर्थ्यमाशङ्क्य फलाभिधानार्थत्वेन सार्थकत्वमाह । तत्रेति ।

ननु जल्पवितण्डयोरपि प्रमाणतर्कसम्भवाल्लक्षणमतिव्याप्तमित्याशङ्क्यावधारणस्य विवक्षितत्वान्नायं दोष इति व्याचष्टे । प्रमाणतर्काभ्यामेवेति । तेन छलादिनिवृत्तिः । तथा च प्रमाणतर्काभ्यामेव स्वपक्षसाधनपरपक्षोपालम्भवती कथा वाद इति लक्षणं द्रष्टव्यम् । ननु पक्षद्वयेऽपि कथं प्रमाणतर्कसम्भव इत्यत उक्तम् अभिमानमात्रमिति । अवास्तवत्वे हेतुमाह । उभयोरपीति । वस्तुनो द्वैरूप्यासम्भवादिति भावः । प्रामाणिकमात्रं प्रामाणिकमेवेदं वचनमित्यभिप्रायोऽभिमानः पूर्वो यस्याः सेत्यर्थः ।

---

(१) न तु–पा॰ C पु॰ ।

तत्त्वावसाय[1]फलत्वादस्यां वीतरागाणामेव शिष्याचार्यसब्रह्मचारिणामधिकारः[2] न च विजिगीषूणामित्युक्तं वीतरागकथेति । तदुक्तम् । तं शिष्यगुरुसब्रह्मचारिशिष्टश्रेयोर्थिभिरनसूयुभिरभ्युपेयादिति । अज्ञातज्ञापनं ज्ञातस्य स्थिरीकरणं संशयनिवर्तनमिति त्रिविधस्तत्त्वनिर्णयः । अत्र निग्रहस्थानमुत्तरत्र[3] दर्शयिष्यति । तदुक्तम् । प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वाद इति ॥ ७७ ॥ ८८ ॥

---

नन्वेवं लक्षणे वीतरागपदं वृथेत्याशङ्क्य सत्यम् किं त्वधिकारिनिरूपणार्थमित्याह । तत्त्वावसायेति । वादस्य वीतरागमात्राधिकारित्वे सूत्रसम्मतिमाह । तदुक्तमिति । तं वादमित्यर्थः । अत्राधिकारित्रैविध्यात् फलत्रैविध्यमाह । अज्ञातेत्यादि । गुरुशिष्यवादे ऽज्ञातज्ञापनं फलम् सब्रह्मचारिवादे ज्ञातस्थिरीकरणम् शिष्टमुमुक्षुवादे संशयनिवर्तनमिति यथासङ्ख्यं द्रष्टव्यम् । एवं वादस्य लक्षणाधिकारिणौ निरूप्य तत्रोद्भाव्यानुद्भाव्यादिनिग्रहनियमजिज्ञासायामाह । अत्रेति । उत्तरत्रेति । निग्रहान्त इत्यर्थः । अथ वादलक्षणे सूत्रसम्मतिमाह । तदुक्तमिति । प्रमाणतर्काभ्यामेव साधनोपालम्भौ यस्मिन् स पक्षप्रतिपक्षपरि-

---

(१) तत्त्वाध्यवसाय-पा॰ C पु॰ ।

(२) सब्रह्मचार्यादीनामधिकारो-पा॰ B पु॰ ।

(३) निग्रहस्थानव्यवस्थितिमुत्तरत्र-पा॰ B पु॰ ।

जल्पवितण्डे दर्शयति ।

**स च छलादिसम्भिन्नो[1] जल्पोऽस्य विजयः फलम् ॥ ९८ ॥**

**जल्प एव वितण्डा स्यात् प्रतिपक्षे त्वसाधने ।**

स इति तच्छब्देन प्रमाणतर्कनियमाभिधानं तत्त्वावसाय[2]लक्षणं फलं च परिहायोक्तलक्षणो वादः परामृश्यते । छलादिप्रयोगाभ्यनुज्ञानाद्विजयफलत्वनिर्देशाच्च ततो भिद्यते । ततश्च प्रमाणतर्काभ्यां

ग्रहो वाद इति लक्षणम् । सिद्धान्ताविरुद्ध इत्यनेन तद्विरोधेऽपसिद्धान्तेन निग्राह्य इति सूचितम् । स्वपक्षसाधनं तत्समर्थनं परपक्षदूषणं तत्समर्थनं शब्ददोषवर्जनं चेति पञ्चावयवास्तदुपपादकाः । अन्यथाङ्गवैकल्यात् कथाभासत्वप्रसङ्ग इति भावः । इति वादपदार्थः ॥ ७७ ॥ ८८ ॥

अथोत्तरश्लोके स इति सर्वनाम्ना पुनर्वादोपादानात् तस्यैव लक्षणान्तराभिधानमिति मन्दभ्रमनिरासार्थमाह । जल्पवितण्डे इति ।

ननु स इति पूर्वोक्तलक्षणं वादं परामृश्य पुनस्तस्यैव तद्विरुद्धधर्माभिधाने व्याघातः स्यादित्याशङ्क्याह । स इतीति । विशेषणप्रयोजनमाह । छलादीति । अस्त्येव वादाद् भेदो जल्पस्य वितण्डायास्तु कथं भेद इति शङ्कां निरस्य लक्षणं निष्कृष्याह । ततश्चेति । स्वपरेत्यादिविशे-

(१) समेतो–पा॰ C पु॰ ।

(२) तत्त्वाध्यवसाय–पा॰ C पु॰ ।

छलादिभिश्च स्वपरपक्षसाधनोपालम्भवती विजिगीषुकथा जल्पः । विजिगीषमाणयोरुभयोरपि साधनोपालम्भवती कथा जल्प इत्याचार्याः । तत्र हि मत्सरादिना विजिगीषया वा कथाप्रवृत्तेः । सदुत्तरापरिस्फूर्त्तौ छलादिप्रयोगेणापि प्रतिवादी पर्याकुलितमानसोऽप्रतिभो ऽसदुत्तरवादी वा भवेदितीतरस्यावष्टम्भे विजयसम्भवात् प्रमाणतर्काभ्यामेव व्यवहार इत्यभिमानोऽपि न विवक्षितः। तस्यां च कथायां परपक्षसाधनानुपालम्भे तु न स्वपक्षस्थितिमात्रेण विजयी अपि तु केवलं श्लाघ्य एव स्यात् । वञ्चितपरप्रहारस्तमप्रहरमाण इव वीरः । स्वसाधनासिद्धौ परदूषणमात्रेणापि

---

पणाद्वितण्डातो भेद इत्यर्थः । अत्रापि विजिगीषुपदमधिकारिनिरूपणार्थम् । अत्रोदयनसम्मतिमाह । विजिगीषमाणयोरिति । विजिगीषमाणाधिकारत्वाच्छलादिसम्भेदो लभ्यते तेन वादाद् भेदः । शेषेण क्रमाद् वितण्डाकथाभासाभ्यां भेदः । ननु विजिगीषवोरपि वादवत् तत्राभिमानिकोऽपि प्रमाणतर्कव्यवहारः किं नेष्ट इत्याशङ्क्याह । तत्रेति । यथा कथञ्चित् परभञ्जनैकतत्पराणां किं तया चिन्तयेति भावः । अवष्टम्भो बलात्कारः । एकपक्षसत्त्वस्वपरपक्षसाधनोपालम्भयोर्द्वयोरपि यः कर्ता स एव जेता नान्यतरकारी किं स्वभावाद् भावोऽतिरिच्यत इति न्यायादुभयप्रष्टाद् वरमिति श्लाघते केवलमिति सदृष्टान्तमाचष्टे । तस्यां चेत्यादि । जल्पलक्षणे सूत्रसम्मति-

तथा यथा आत्मानमरक्षन् परघातीव वीरः। ततश्च स्वपरपक्षयोः साधनोपालम्भाभ्यामेव विजयो नान्यतरमात्रेणेति। तदुक्तम्। यथोक्तोपपन्नच्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति ॥

प्रतिपक्षस्थापनामात्रहीनो जल्प एव वितण्डा भवति। अत्र प्रतिवादी यं कञ्चन सिद्धान्तमवलम्ब्य व्यवस्थितः प्रतिपक्षभङ्गमात्रेण विजयी भवति न तु जल्पवत्स्वपक्षसाधनेनापीत्युक्तम् प्रतिपक्षे त्वसाधन इति। सिद्धान्तावष्टम्भस्त्ववश्यं करणीयः।

---

माह। तदुक्तमिति। अत्र तन्त्रोच्चारितोपपन्नपदावृत्त्या यथोक्ते वादलक्षणे यदुपपन्नं योग्यं केवलप्रमाणतर्कतत्त्वावसायफलातिरिक्तं तेनोपपन्नो युक्तः छलादिसम्भिन्नो जल्प इति सूत्रार्थः। इति जल्पपदार्थः॥

श्लोकोत्तरार्द्धे वितण्डालक्षणमुक्तं तस्यार्थं निष्कृष्याह। प्रतिपक्षेति। अत्र जल्प एवेति मासमग्निहोत्रवत् तद्धर्मप्राप्त्यर्थो नामातिदेशस्तेन छलादिसम्भिन्नं इत्यर्थः। एतद्यास्यापि[1] जल्पवज्जयमात्रफलत्वान्न वादवत् केवलप्रमाणतर्कव्यवहारनियम इति ज्ञापनार्थमुक्तम्। लक्षणं तु प्रतिपक्षस्थापनारहिता वितण्डेत्येव। एतावतैव जल्पाद् वादादपि व्यावृत्तेः। ईदृग्वादाभासव्यावृत्त्यर्थं तस्यापि सम्भावितत्वादिति केचित्। प्रतिपक्षे त्वसाधन इति प्रतिपक्षस्थापनानिषेधादर्थादस्याप्यावलम्बो न कार्य इति भ्रमः स्याद् अतोऽभिप्रायं व्याचष्टे। अत्रेति। तर्ह्यस्याप्यपक्षस्य

(१) वितण्डाख्यस्यापि।

अन्यथाऽनित्यः शब्दः कृतकत्वादिति नैयायिकेन प्रयुक्ते कश्चन वैतण्डिकाभिमानी मीमांसादृष्ट्या पूर्वमसिद्धिमुद्भाव्य वादिना पुनः साध्यमाने हेतौ सौगतमतानुसारेण सिद्धसाधनतामुद्भावयेदित्यपरिनिष्ठितः कथाव्यवहारः स्यात् । अत एव सूत्रकारोऽपि प्रतिवादिनः पक्षपरिग्रहमङ्गीकृत्य तस्य स्थापनामात्रं निराचष्टे स प्रतिपक्षस्थापनाहीनो वितण्डेति । जल्पवितण्डयोरेव चतुःपञ्चानां षट्सप्तानां वाक्यानां

---

किमवलम्बनेनेत्यत आह । सिद्धान्तावष्टम्भस्त्विति । कुत इत्याशङ्क्यान्यथातिप्रसङ्गादित्याह । अन्यथेति । मीमांसामते शब्दस्य नित्यत्वात् कृतकत्वस्यासिद्धिः । साध्यमान इति । प्रयत्नानन्तरीयकत्वादिनेति शेषः । हेतौ कृतकत्वहेतावित्यर्थः । सौगतमते सन्मात्रस्य क्षणिकत्वात् सिद्धसाधनता नियता स्यादिति जयपराजयव्यवस्था न स्यादित्यर्थः । स्वोक्तं सूत्रसंवादेन द्रढयति । अत एवेति । पक्षपरिग्रहानङ्गीकारे प्रतिपक्षहीन इत्येवोच्येत न तु स्थापनाहीन इति भावः । यद्यपि कथा तस्या षडङ्गानि प्राहुश्चत्वारि केचनेति सामान्येनोक्तं प्राक् तथापि तज्जल्पवितण्डाविषयमेव न वादविषयमिति नियच्छति । जल्पवितण्डयोरेवेति । चत्वारि पञ्च वा चतुःपञ्चानि षट् सप्त वा षट्सप्तानि तेषाम् । सङ्ख्ययाव्ययेत्यादिना बहुव्रीहिः बहुव्रीहौ सङ्ख्येये डजबहुगणादिति समासान्तो डच्प्रत्ययः । लेखकस्वीकारपक्षे पञ्चमसप्तमसम्भवः । अथ वादे

नियमावश्यम्भावः। वादे तु तदनपेक्षमेव तत्त्वावसायफलसिद्धेः। न च न विगृह्य कथां कुर्यादित्यादिभिर्जल्पवितण्डयोर्निषेधः शङ्कनीयः। नास्तिकनिराकरणार्थमवश्यकर्तव्यत्वेन तदितरविषयत्वान्निषेधस्य। तदुक्तम्। तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदिति ताभ्यां विगृह्य कथनमिति च ॥ ७८ ॥ ٥٥ ॥

अथ हेत्वाभासाः।

हेतोः केनापि रूपेण रहिताः कैश्चिदन्विताः ॥७९॥

---

तन्नियमाभावे हेतुमाह। वादे त्विति। तदनपेक्षमङ्गानपेक्षं क्रियाविशेषणं चैतत्। ननु निषिद्धयोर्जल्पवितण्डयोः किमर्थं लक्षणमुच्यते यत् प्रक्षाल्य त्यागः स्यादित्याशङ्क्याह। न चेति। कुतो न शङ्कनीय इत्याशङ्क्य निषेधस्य नास्तिकेतरप्रतियोगिककथाविषयत्वादित्याह। नास्तिकेति। तर्हि किं तदनयोः कर्तव्यताबोधकं शास्त्रमित्याकाङ्क्षायां सूत्रमेवेत्याह। तदुक्तमिति। स्मृतिवत् सूत्रस्यापि आर्षत्वात् तदपवादकत्वं युक्तमिति भावः। जल्पवितण्डे इति। कर्तव्ये इति शेषः। नन्वनेन सूत्रेणानयोः कर्तव्यतामात्रं प्रयोजनं चोक्तं न तु विगृह्य कथनमिति कथमस्यापवादकत्वमित्याशङ्क्यान्तरसूत्रे तदुक्तमित्याह। ताभ्यामिति। इति वितण्डापदार्थः ॥ ७८ ॥ ٥٥ ॥

अथ कथानन्तरमुद्देशक्रमाद्धेत्वाभासा लक्ष्यन्ते इत्याह। अथेति।

**हेत्वाभासाः पचधा ते[१] गौतमेन प्रपञ्चिताः ।**

उक्तानां चतुःपञ्चानां रूपाणामन्यतमेन विकलास्तदितराङ्गसद्भावे ऽपि हेतव[२] श्राभासा भवन्ति । ते च पञ्चविधाः । तदुक्तम् । सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा इति । गौतमग्रहणेन मतान्तरे विशेषं दर्शयति[३] । स चोपन्यस्य निरस्यत[४] इति ॥ ७९ ॥ ऽऽ ॥

**तत्र सव्यभिचारः स्यादनेकान्तः स च द्विधा॥८०॥**
**साधारणस्तथा हेतुरसाधारण इत्यपि ।**

---

रूपशब्दस्यानेकार्थत्वात् विवक्षितमर्थमाह । उक्तानामिति । अनुमानोक्तानां पक्षधर्मत्वादीनामित्यर्थः । नन्वेतल्लक्षणं केवलान्वयिकेवलव्यतिरेकिणोरतिव्याप्तमित्याह । चतुःपञ्चानामिति । तयोश्चतुरन्यतमराहित्यमितरत्र पञ्चान्यतमराहित्यं च विवक्षितम् । तथा च योग्यान्यतमरूपविकलो हेत्वाभास इत्यर्थः । तत्पाञ्चविध्ये सौत्रमुद्देशं प्रमाणयति । तदुक्तमिति ॥ ७९ ॥ ऽऽ ॥

तत्राद्यस्य लक्षणं विभागं चाह । तत्रेत्यादि ।

---

(१) पञ्चाधामी-पा॰ A पु॰ ।
(२) सम्यक्तावपि हेतव-पा॰ B पु॰ ।
(३) द्योतयति-पा॰ B पु॰ । सूचयति-पा॰ C पु॰ ।
(४) निरसिष्यत इति-पा॰ B पु॰ ।

**तत्र हेत्वाभासेषु सव्यभिचारो नामानेकान्तः[1] एकत्रान्तो निश्चयो व्यवस्थितिर्नास्तीति । तदुक्तम् । अनैकान्तिकः सव्यभिचार इति । स च साधारणोऽसाधारण इति च द्विविधो भवतीति ॥ ८० ॥ ऽऽ ॥**

**ननु व्यवस्थान[2]मतिलङ्घ्यान्यत्रापि वृत्तिर्व्यभिचारः । तत्र साधारणस्य पक्षसपक्षलक्षणस्थानातिक्रमेण विपक्षेऽपि वृत्तेर्भवति व्यभिचारिता[3] । पक्षमात्रवृत्तेस्त्वसाधारणस्य कथं व्यभिचारिता । तस्य हि स्वस्थानवृत्तिरेव सङ्कुचिता दूरेऽन्यत्रापि वृत्तिरित्याशङ्कामपनुदन् विधाद्वयमेव विविच्य दर्शयति ।**

**आद्योऽन्वयादनेकान्तः पक्षत्रयवृत्ताश्रयः[4] ॥ ८१ ॥**

---

तत्रेत्यस्य प्रकृतिप्रत्ययार्थौ दर्शयन् लक्ष्यलक्षणपदे विविच्य योजयति । तत्र हेत्वभासेष्विति । तत्र विधाद्वयव्याप्तिज्ञानाय लक्षणपदं व्युत्पादयति । एकत्रेति । निश्चयवाचिनान्तशब्देन नियतत्वसाम्याद् व्यवस्थितिर्लक्ष्यते तेन साधारणस्य पक्षसपक्षयोरिव विपक्षेऽपि प्रवृत्तेरसाधारणस्य सति सपक्षे पक्षमात्रवृत्तेर्विपक्षादिवत् सपक्षादपि सर्वस्मात् व्यावृत्तेश्च स्वसीमातिक्रमेण व्यवस्थितत्वादनैकान्तिकत्वमित्यर्थः । अत्र सूत्रं संवादयति । तदुक्तमिति ॥ ८० ॥ ऽऽ ॥

अथ यथोक्तश्लोकेनोत्तरश्लोकस्य पौनरुक्त्यमाशङ्क्य शङ्कोत्तरत्वेन अस्यैव विचारणान्न दोष इत्याशयेन शङ्कापूर्वकमवतारयति । नन्विति ।

---

(१) अनैकान्तिकः–पा० C पु० । (२) स्वस्थान–पा० C पु० ।
(३) व्यभिचारः–पा० B पु० । (४) कृतान्वयः–पा० A पु० ।

**व्यतिरेकादनेकान्तः पक्षमात्रान्वयः परः ।**

अन्वयो व्यतिरेक इति च द्वे हेतुरूपे तत्रान्वयस्य भूमिः पक्षसपक्षौ व्यतिरेकस्य तु विपक्ष एव। सपक्षाश्च वा केचित्। तत्रान्वयस्य विपक्षेऽपि वृत्तेर्यथा व्यभिचारः। एवं व्यतिरेकस्यापि सर्वेष्वपि सपक्षेषु वृत्तेर्भवत्येव व्यभिचारः। अत एव पक्षमात्रवृत्तेरपि केवलव्यतिरेकिणः सपक्षाभावादेव तत्र व्यतिरेको न वर्तत इति न व्यभिचारः। सपक्षविपक्षयोरुभयोरपि व्यतिरेकोऽस्तीति दर्शयितुं पक्षमात्रान्वयः पर इत्युक्तम्। पक्ष एवान्वयोऽन्यत्र सर्वत्र व्यति-

---

पक्षमात्रान्वय इत्यत्र सति सपक्षे इति शेषः। अन्यथा केवलव्यतिरेकिणोऽप्यहेतुत्वप्रसङ्गात्।

इह श्लोके ऽन्वयव्यतिरेकग्रहणं किमर्थमित्याशङ्क्य व्याचष्टे। अन्वय इत्यादि। ननु व्यतिरेकस्य विपक्षमात्रभूमिकत्वे सपक्षैकदेशवृत्तेर्धूमादिहेतोरहेतुत्वं स्यादित्यत आह। सपक्षाश्च वा केचित्। नन्वेतावता पूर्वोक्तशङ्कानिरासः कथमत आह। तत्रान्वयस्येति। एवं च सति सपक्षे पक्षमात्रवृत्तिरसाधारणः असति तन्मात्रवृत्तिर्व्यतिरेकीति सिद्धमित्याह। अत एवेति। ननु श्लोके व्यतिरेकस्य सपक्षगामित्वं कुत्रोक्तमत आह। सपक्षविपक्षयोरिति। तत्रापि मात्रपदं प्रसादलभ्यमित्याह। पक्ष एवेति। क्रमेण विधाद्वयमुदाहरति। तत्रेत्यादि ॥ ८१ ॥ ८८ ॥

**तत्र हेत्वाभासेषु सव्यभिचारो नामानेकान्तः[1]**
**एकत्रान्तो निश्चयो व्यवस्थितिर्नास्तीति । तदुक्तम् ।**
**अनैकान्तिकः सव्यभिचार इति । स च साधारणो-**
**ऽसाधारण इति च द्विविधो भवतीति ॥ ८० ॥ ऽऽ ॥**

**ननु व्यवस्थान[2]मतिलङ्घ्यान्यत्रापि वृत्तिर्व्य-**
**भिचारः । तत्र साधारणस्य पक्षसपक्षलक्षणस्थानाति**
**क्रमेण विपक्षेऽपि वृत्तेर्भवति व्यभिचारिता[3] । पक्ष-**
**मात्रवृत्तेस्त्वसाधारणस्य कथं व्यभिचारिता । तस्य**
**हि स्वस्थानवृत्तिरेव सङ्कुचिता दूरेऽन्यत्रापि वृत्ति-**
**रित्याशङ्कामपनुदन् विधाद्वयमेव विविच्य दर्शयति ।**
**आद्योऽन्वयादनेकान्तः पक्षत्रयकृताश्रयः[4] ॥ ८१ ॥**

---

तत्रेत्यस्य प्रकृतिप्रत्ययार्थौ दर्शयन् लक्ष्यलक्षण-
पदे विविच्य योजयति । तत्र हेत्वभासेष्विति । तत्र
विधाद्वयव्याप्तिज्ञानाय लक्षणपदं व्युत्पादयति । एक-
त्रेति । निश्चयवाचिनान्तशब्देन नियतत्वसाम्याद् व्यव-
स्थितिर्लक्ष्यते तेन साधारणस्य पक्षसपक्षयोरिव विपक्षे-
ऽपि प्रवृत्तेरसाधारणस्य सति सपक्षे पक्षमात्रवृत्तेर्विपक्षा-
दिवत् सपक्षादपि सर्वस्मात् व्यावृत्तेश्च स्वसीमातिक्र-
मेण व्यवस्थितत्वादनैकान्तिकत्वमित्यर्थः । अत्र सूत्रं
संवादयति । तदुक्तमिति ॥ ८० ॥ ऽऽ ॥

अथ यथोक्तश्लोकेनोत्तरश्लोकस्य पौनरुक्त्यमाशङ्क्य
शङ्कोत्तरत्वेन अस्यैव विचारणान्न दोष इत्याशयेन
शङ्कापूर्वकमवतारयति । नन्विति ।

---

(१) अनेकान्तिकः–पा० C पु० । (२) स्वस्थान–पा० C पु० ।
(३) व्यभिचारः–पा० B पु० । (४) कृतान्वयः–पा० A पु० ।

**व्यतिरेकादनेकान्तः पक्षमात्रान्वयः परः ।**

अन्वयो व्यतिरेक इति च द्वे हेतुरूपे तत्रान्वयस्य भूमिः पक्षसपक्षौ व्यतिरेकस्य तु विपक्ष एव। सपक्षाश्च वा केचित्। तत्रान्वयस्य विपक्षेऽपि वृत्तेर्यथा व्यभिचारः। एवं व्यतिरेकस्यापि सर्वेष्वपि सपक्षेषु वृत्तेर्भवत्येव व्यभिचारः। अत एव पक्षमात्रवृत्तेरपि केवलव्यतिरेकिणः सपक्षाभावादेव तत्र व्यतिरेको न वर्तत इति न व्यभिचारः। सपक्षविपक्षयोरुभयोरपि व्यतिरेकोऽस्तीति दर्शयितुं पक्षमात्रान्वयः पर इत्युक्तम्। पक्ष एवान्वयोऽन्यत्र सर्वत्र व्यति-

---

पक्षमात्रान्वय इत्यत्र सति सपक्षे इति शेषः। अन्यथा केवलव्यतिरेकिणोऽप्यहेतुत्वप्रसङ्गात्।

इह श्लोके ऽन्वयव्यतिरेकग्रहणं किमर्थमित्याशङ्क्य व्याचष्टे। अन्वय इत्यादि। ननु व्यतिरेकस्य विपक्षमात्रभूमिकत्वे सपक्षैकदेशवृत्तेर्धूमादिहेतोरहेतुत्वं स्यादित्यत आह। सपक्षाश्च वा केचित्। नन्वेतावता पूर्वोक्तचाङ्कानिरासः कथमत आह। तत्रान्वयस्येति। एवं च सति सपक्षे पक्षमात्रवृत्तिरसाधारणः असति तन्मात्रवृत्तिर्व्यतिरेकीति सिद्धमित्याह। अत एवेति। ननु श्लोके व्यतिरेकस्य सपक्षगामित्वं कुत्रोक्तमत आह। सपक्षविपक्षयोरिति। तत्रापि मात्रपदं प्रसादलभ्यमित्याह। पक्ष एवेति। क्रमेण विधाद्वयमुदाहरति। तत्रेत्यादि॥ ८१॥ ऽऽ॥

**तत्र हेत्वाभासेषु सव्यभिचारी नामानेकान्तः[1] एकत्रान्तो निश्चयो व्यवस्थितिर्नास्तीति । तदुक्तम् । अनैकान्तिकः सव्यभिचार इति । स च साधारणोऽसाधारण इति च द्विविधो भवतीति ॥ ८० ॥ ऽऽ ॥**

**ननु व्यवस्थान[2]मतिलङ्घ्यान्यत्रापि वृत्तिर्व्यभिचारः । तत्र साधारणस्य पक्षसपक्षलक्षणस्थानातिक्रमेण विपक्षेऽपि वृत्तेर्भवति व्यभिचारिता[3] । पक्षमात्रवृत्तेस्त्वसाधारणस्य कथं व्यभिचारिता । तस्य हि स्वस्थानवृत्तिरेव सङ्कुचिता दूरेऽन्यत्रापि वृत्तिरित्याशङ्कामपनुदन् विधाद्वयमेव विविच्य दर्शयति ।**

**आद्योऽन्वयादनेकान्तः पक्षत्रयकृताश्रयः[4] ॥ ८१ ॥**

---

तत्रेत्यस्य प्रकृतिप्रत्ययार्थौ दर्शयन् लक्ष्यलक्षणपदे विविच्य योजयति । तत्र हेत्वभासेष्विति । तत्र विधाद्वयव्याप्तिज्ञानाय लक्षणपदं व्युत्पादयति । एकत्रेति । निश्चयवाचिनान्तशब्देन नियतत्वसाम्याद् व्यवस्थितिर्लक्ष्यते तेन साधारणस्य पक्षसपक्षयोरिव विपक्षेऽपि प्रवृत्तेरसाधारणस्य सति सपक्षे पक्षमात्रवृत्तेर्विपक्षादिवत् सपक्षादपि सर्वस्मात् व्यावृत्तेश्च स्वसीमातिक्रमेण व्यवस्थितत्वादनैकान्तिकत्वमित्यर्थः । अत्र सूत्रं संवादयति । तदुक्तमिति ॥ ८० ॥ ऽऽ ॥

अथ यथोक्तश्लोकेनोत्तरश्लोकस्य पौनरुक्त्यमाशङ्क्य शङ्कोत्तरत्वेन अस्यैव विचारणान्न दोष इत्याशयेन शङ्कापूर्वकमवतारयति । नन्विति ।

---

(१) अनैकान्तिकः–पा॰ C पु॰ । (२) स्वस्थान–पा॰ C पु॰ । (३) व्यभिचारः–पा॰ B पु॰ । (४) कृतान्वयः–पा॰ A पु॰ ।

**व्यतिरेकाद्नेकान्तः पक्षमात्रान्वयः परः ।**

अन्वयो व्यतिरेक इति च द्वे हेतुरूपे तत्रान्वयस्य भूमिः पक्षसपक्षौ व्यतिरेकस्य तु विपक्ष एव । सपक्षाश्च वा केचित् । तत्रान्वयस्य विपक्षे ऽपि वृत्तेर्यथा व्यभिचारः । एवं व्यतिरेकस्यापि सर्वेष्वपि सपक्षेषु वृत्तेर्भवत्येव व्यभिचारः । अत एव पक्षमात्रवृत्तेरपि केवलव्यतिरेकिणः सपक्षाभावादेव तत्र व्यतिरेको न वर्तत इति न व्यभिचारः । सपक्षविपक्षयोरुभयोरपि व्यतिरेकोऽस्तीति दर्शयितुं पक्षमात्रान्वयः पर इत्युक्तम् । पक्ष एवान्वयोऽन्यत्र सर्वत्र व्यति-

---

पक्षमात्रान्वय इत्यत्र सति सपक्षे इति शेषः । अन्यथा केवलव्यतिरेकिणोऽप्यहेतुत्वप्रसङ्गात् ।

इह श्लोके ऽन्वयव्यतिरेकग्रहणं किमर्थमित्याशङ्क्य व्याचष्टे । अन्वय इत्यादि । ननु व्यतिरेकस्य विपक्षमात्रभूमिकत्वे सपक्षैकदेशवृत्तेर्धूमादिहेतोरहेतुत्वं स्यादित्यत आह । सपक्षाश्च वा केचित् । नन्वेतावता पूर्वोक्तशङ्कानिरासः कथमत आह । तत्रान्वयस्येति । एवं च सति सपक्षे पक्षमात्रवृत्तिरसाधारणः असति तन्मात्रवृत्तिर्व्यतिरेकीति सिद्धमित्याह । अत एवेति । ननु श्लोके व्यतिरेकस्य सपक्षगामित्वं कुत्रोक्तमत आह । सपक्षविपक्षयोरिति । तत्रापि मात्रपदं प्रसादलभ्यमित्याह । पक्ष एवेति । क्रमेण विधाद्वयमुदाहरति । तत्रेत्यादि ॥ ८१ ॥ ८८ ॥

यथा शुक्लोऽयं शङ्खः शङ्खत्वादितरशङ्खवदिति प्रयोगे पीतत्वेन प्रत्यक्षोपलब्धेः शुक्ल एव कथं स्यादिति। तमिमं प्रकरणसमं विरुद्धाव्यभिचारीति केचिद्व्यपदिशन्ति यथाहुः।

यत्राप्रत्यक्षता वायोररूपित्वेन साध्यते।
स्पर्शात् प्रत्यक्षता चासौ विरुद्धाव्यभिचारिता॥ इति।

तदुक्तम्। यस्मात् प्रकरणचिन्ता स निर्ण-

---

दाहरति। यथेति। एवमात्मनानात्वसाधनस्य व्यवस्थादेरद्वैतवाक्येन प्रतिरोध इत्याद्यूह्यम्। नन्वस्य(१) विरुद्धाव्यभिचारिणः परोक्ताद्भेदे पञ्चैवेतिनियमभङ्गादित्याशङ्क्य भेदमाह। तमिममिति। अभेदव्यक्तये(२) परोक्तमुदाहरणं दर्शयति। यथाहुरिति।

अत्र वायोरप्रत्यक्षत्वसाधकहेतोररूपित्वस्य प्रत्यक्षत्वे हेतुना स्पर्शवत्त्वेन प्रतिरुद्धत्वाद्विरुद्धः प्रतिरुद्धः सत्यव्यभिचाराप्रतीतेरव्यभिचारी चेति तस्यैव तथा व्यपदेशात् स एव स इत्यर्थः।

अथ स्वोक्तप्रकरणसमलक्षणे सूत्रसम्मतिमाह। तदुक्तमिति। यस्माद्वादिप्रयुक्ताद्धेतोरुपरि प्रकरणचिन्ता विपरीतसाध्यसाधकहेतुविचारः प्रवर्तते स निर्णयार्थं स्वसाध्यसिद्ध्यर्थमुपदिष्टो वादिहेतुः प्रकरणेन प्रतिहेतुना समपक्षत्वात् प्रकरणसम उच्यत इति सूत्रार्थः। अत्र

---

(१) अस्य प्रकरणसमस्य विरुद्धाव्यभिचारीतिव्यपदेशात् प्रकरणसम एव विरुद्धाव्यभिचारीति भावः।

(२) प्रकरणसमस्य।

यार्थमपदिष्टः[१] प्रकरणसम इति । एकदेशिनस्तु स्वपक्षपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसम इति लक्षयन्ति उदाहरन्ति च । यथानित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवदिति । तदिदं तावदसम्भवि लक्षणम् न ह्येकस्यैव हेतोरुभयत्रापि त्रैरूप्यं सम्भवति । नित्यत्वे साध्ये गगनं सपक्षः इतरत्र तदेव विपक्षः । न त्वेक एव हेतुः सपक्षे तत्र वर्तते विपक्षाच्च ततो व्यावर्तते चेति सम्भवति पक्षसपक्षयोरन्यतरत्वादित्यस्याप्येकदा शब्दाकाशयोरन्यतरत्वादित्यर्थोऽन्यदा शब्दघटयोरन्यतरत्वादित्यर्थः । ततश्च शब्दमात्रमत्रैकं नार्थ इति न किञ्चिदेतत् ।

**असिद्धः साध्यतुल्यत्वाद्धेतुः साध्यसमो भवेत्**
**॥ ८३ ॥**

असिद्धो हेतुः साध्यसम इति लक्षणम् । साध्य-

---

भूषणोक्तं लक्षणं दूषयितुमनुभाषते । एकदेशिनस्त्विति । दूषयति । तदिदमिति । कुत इत्यत आह । न हीति । असम्भवं व्यनक्ति । नित्यत्व इतीति । किं च एकस्य हेतोरुभयत्र त्रैरूप्यं लक्षणं तदैकत्र्यमेव हेतोरसिद्धमित्याह । पक्षसपक्षयोरित्यादि ।

अथ साध्यसमं लक्षयति । असिद्ध इति ।

अत्र लक्षणांशं निष्कृष्याह । असिद्धो हेतुरिति ।

---

(१) मुद्रिष्टः—पा॰ C पु॰ ।

यथा शुक्लोऽयं शङ्खः शङ्खत्वादितरशङ्खवदिति प्रयोगे पीतत्वेन प्रत्यक्षोपलब्धेः शुक्ल एव कथं स्यादिति। तमिमं प्रकरणसमं विरुद्धाव्यभिचारीति केचिद्व्यपदिशन्ति यथाहुः।

यत्राप्रत्यक्षता वायोररूपित्वेन साध्यते।
स्पर्शात् प्रत्यक्षता चासौ विरुद्धाव्यभिचारिता॥ इति।

तदुक्तम्। यस्मात् प्रकरणचिन्ता स निर्ण-

---

दाहरति। यथेति। एवमात्मनानात्वसाधनस्य व्यवस्थादेरद्वैतवाक्येन प्रतिरोध इत्याद्यूह्यम्। नन्वस्य(१) विरुद्धाव्यभिचारिणः परोक्ताद्भेदे पञ्चैवेतिनियमभङ्गादित्याशङ्क्य भेदमाह। तमिममिति। अभेदव्यक्तये(२) परोक्तमुदाहरणं दर्शयति। यथाहुरिति।

अत्र वायोरप्रत्यक्षत्वसाधकहेतोररूपित्वस्य प्रत्यक्षत्वे हेतुना स्पर्शवत्त्वेन प्रतिरुद्धत्वाद्विरुद्धः प्रतिरुद्धः सत्यव्यभिचाराप्रतीतेरव्यभिचारी चेति तस्यैव तथा व्यपदेशात् स एव स इत्यर्थः।

अथ स्वोक्तप्रकरणसमलक्षणे सूत्रसम्मतिमाह। तदुक्तमिति। यस्माद्वादिप्रयुक्ताद्धेतोरुपरि प्रकरणचिन्ता विपरीतसाध्यसाधकहेतुविचारः प्रवर्तते स निर्णयार्थं स्वसाध्यसिद्ध्यर्थमुपदिष्टो वादिहेतुः प्रकरणेन प्रतिहेतुना समबलत्वात् प्रकरणसम उच्यत इति सूत्रार्थः। अत्र

---

(१) अस्य प्रकरणसमस्य विरुद्धाव्यभिचारीतिव्यपदेशात् प्रकरणसम एव विरुद्धाव्यभिचारीति भावः।

(२) प्रकरणसमस्य।

यार्थमपदिष्टः[1]प्रकरणसम इति । एकदेशिनस्तु स्वपक्षपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकरणसम इति लक्षयन्ति उदाहरन्ति च । यथानित्यः शब्दः पक्षसपक्षयोरन्यतरत्वात् सपक्षवदिति । तदिदं तावदसम्भवि लक्षणम् न ह्येकस्यैव हेतोरुभयत्रापि त्रैरूप्यं सम्भवति । नित्यत्वे साध्ये गगनं सपक्षः इतरत्र तदेव विपक्षः । न त्वेक एव हेतुः सपक्षे तत्र वर्तते विपक्षाच्च ततो व्यावर्तते चेति सम्भवति पक्षसपक्षयोरन्यतरत्वादित्यस्याप्येकदा शब्दाकाशयोरन्यतरत्वादित्यर्थोऽन्यदा शब्दघटयोरन्यतरत्वादित्यर्थः । ततश्च शब्दमात्रमत्रैकं नार्थ इति न किञ्चिदेतत् ।

**असिद्धः साध्यतुल्यत्वाद्धेतुः साध्यसमो भवेत्** ॥ ८३ ॥

असिद्धो हेतुः साध्यसम इति लक्षणम् । साध्य-

---

भूषणोक्तं लक्षणं दूषयितुमनुभाषते । एकदेशिनस्त्विति । दूषयति । तदिदमिति । कुत इत्यत आह । न हीति । असम्भवं व्यनक्ति । नित्यत्व इतीति । किं च एकस्य हेतोरुभयत्र त्रैरूप्यं लक्षणं तदैकत्वमेव हेतोरसिद्धमित्याह । पक्षसपक्षयोरित्यादि ।

अथ साध्यसमं लक्षयति । असिद्ध इति ।

अत्र लक्षणांशं निष्कृष्याह । असिद्धो हेतुरिति ।

---

(१) मुद्रित-पा॰ C पु ।

नयः[1] श्यामः मैत्रीतनयत्वादिति[2] सम्प्रतिपन्नवदिति अयं हि शाकाद्याहारपरिणतिप्रयुक्तव्याप्तिकत्वात्[3] सोपाधिकसम्बन्ध इत्यसिद्धव्याप्तिकः । आश्रयासिद्धो यथा ईश्वरो न सर्वज्ञः कर्तृत्वादिति । स्वरूपासिद्धो यथा अनित्यः शब्दः चाक्षुषत्वादिति । भागासिद्धो यथा अनित्ये वाङ्मनसे मूर्तत्वादिति । विशेषणासिद्धिविशेष्यासिद्धिव्यर्थविशेषणासिद्धिव्यर्थविशेष्यासिद्ध्यादीनां उदाहरणानि स्वयमेव द्रष्टव्यानि । अज्ञानासिद्धो यथा । देवदत्तो बहुधनो

---

दि । ईश्वरो न सर्वज्ञ इत्यत्रेश्वरासिद्धौ धर्म्यसिद्धेस्तत्सिद्धौ धर्मिग्राहकबाधात् सन्दिग्धधर्मासिद्धेश्चोभयथाप्याश्रयासिद्धिरिति भावः । स्वरूपासिद्धेरेव भेदान्तरमाह । भागेति । अत्र पक्षैकदेशे वाचि मूर्तत्वाभावाद् भागासिद्धिः । पुनश्च स्वरूपासिद्धेर्भेदान्तराण्यतिदिशति । विशेषणेति । अनित्यः शब्दः मूर्तत्वे सति गुणत्वात् गुणत्वे सति मूर्तत्वात् गुणत्वे सति कृतकत्वात् इति क्रमादेषामुदाहरणानि । आदिशब्दादयं सार्वभौमो भविष्यति तादृग्भाग्यत्वे सति क्षत्रियत्वादित्यादिसन्दिग्धविशेषणासिद्ध्यादिसङ्ग्रहः । अथाज्ञानासिद्धेषु हेत्वज्ञानासिद्धमुदाहरति । देवदत्त इति । सर्वं क्षणिकं सत्त्वाद्

---

(१) मैत्रतनयः-पा· B पु· ।

(२) मैत्रतनयत्वात्-पा B पु· ।

(३) व्याप्तिकत्वेन-पा· B पु· ।

भविष्यति तद्धेतुभूतादृष्टाश्रयत्वादिति । व्याप्त्याश्रययोरज्ञानासिद्धिरुदाहर्तव्या । एताश्चासिद्धयोऽन्यतरासिद्ध्युभयासिद्धिभेदेन च भिद्यन्त इति ॥ ८४ ॥ ८८ ॥

सिद्धसाधने तु सिद्धविशेषणत्वेन पक्षाभासतामिति केचित्[1] । तान्निराकुर्वन्नसिद्धावन्तर्भावमाह ।

**आश्रयासिद्धता हेतोः सिद्धधर्मस्य साधने[2] ॥८५॥**
**पक्षो हि संश्रयस्तस्य स च साध्यान्वितो यतः ।**

---

भविष्यन्मैत्रीपुत्रो वाग्मी भविष्यति विशिष्टपुरुषत्वात् इत्यज्ञानव्याप्त्याश्रयासिद्धयोरुदाहरणे । अथ सर्वासिद्धिसाधारणं द्वैविध्यमाह । एताश्चेति । अनित्यः शब्दः बाह्येन्द्रियप्रत्यक्षद्रव्यत्वादिति वाद्यसिद्धिः नैयायिकैः द्रव्यत्वानभ्युपगमात् कृतकत्वादिति प्रतिवाद्यसिद्धिः मीमांसकैस्तदनङ्गीकारादित्युभयविधेयमन्यतरासिद्धिः तत्रैव चाक्षुषत्वादित्युभयासिद्धिः ॥ ८४ ॥ ८८ ॥

ननु पूर्वश्लोके पक्षतद्धर्मयोरभावादाश्रयासिद्धिरिति व्याख्यानादेव सिद्धसाधनस्याप्याश्रयासिद्धित्वमेवेत्युक्तप्रायमेव तत् किमर्थमुत्तरश्लोके पुनरुच्यत इत्याशङ्क्य पक्षपक्षाभासत्वपक्षप्रतिक्षेपार्थमित्याह । सिद्धसाधने त्विति ।

साध्यान्वित इति । सन्दिग्धसाध्यधर्मक इत्यर्थः ।

---

(१) सिद्धविशेषणत्वेन पक्षाभासः सिद्धसाधनमिच्छन्ति केचित्–पा॰ B पु॰ ।

(२) साधनात्–पा॰ C पु॰ ।

प्रतिवादिनोऽपि सिद्धस्य धर्मस्य साधने क्रियमाणे हेतुराश्रयासिद्धो भवति । कुतः पक्षो हि हेतोराश्रयः साध्यधर्मविशिष्टश्च धर्मी पक्ष इत्युक्तम् । तत्र यथा विशेष्यस्य धर्मिणोऽभावादाश्रयासिद्धः तथा विशेषणस्य साध्यधर्मवत्त्वस्याभावादपि विशेष्याभाव इव विशेषणाभावे ऽपि विशिष्टाभावस्याविशिष्टत्वादसिद्धिभेद एवायमिति ॥ ८५ ॥ ऽऽ ॥

**कालातीतो बलवता प्रमाणेन प्रबाधितः ॥ ८६ ॥**

प्रमाणबाधितविषयः कालातीतः । बलिन एव

---

ननु सिद्धसाधनस्य दोषत्वे सर्वस्यापि साध्यस्य प्रतिवादिनं प्रति सिद्धत्वात् सर्वानुमानोच्छेदः स्यादित्याशङ्क्य व्याचष्टे । प्रतिवादिनोऽपीति । ननु सत्यपि धर्मिणि कथं धर्माभावमात्रेणाश्रयासिद्धिरित्याशयेन शङ्कते । कुत इति । सत्यं न धर्मिमात्रमाश्रयः किं तु धर्मविशिष्टो धर्मीत्याह । पक्षो हीति । ततः किमत आह । तत्रेति । अभावादपीति । आश्रयासिद्धिरित्यनुषङ्गः । कुत इत्यत आह । विशेष्येति । इह विशिष्टस्याश्रयत्वात् तस्य च विशेषणविशेष्ययोरन्यतरापाये ऽप्यपायादित्यर्थः । प्रकृतमुपसंहरति । असिद्धीति ॥ ८५ ॥ ऽऽ ॥

अथ कालात्ययापदिष्टं लक्षयति । कालातीत इति ।

ननु प्रमाणसिद्धस्वरूपस्य हेतोः को बाध इत्याशङ्क्य विषयापहारलक्षण इति व्याचष्टे । प्रमाणेति । संग्रहे बलवतेति विशेषणं व्यावर्त्याभावाद्बाधकस्वरूपकथनमात्रपरम् न तु लक्षणाङ्गमित्याह । बलिन एवेति । केनानुमानेनास्य

बाधकत्वाद्बलवतेत्युक्तम् । तत्र प्रत्यक्षबाधितो यथा अनुष्णोऽग्नि[1]र्द्रव्यत्वादिति । अनुमानबाधितो यथा सावयवाः परमाणवो मूर्तत्वादिति । कथमनुमानबाधित इति चेत् । उच्यते । आद्यावयवि स्वन्यूनपरिमाणोपादानमवयवित्वात् घटवत् । यथा अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वात् महापरिमाणतारतम्यवत्[2] । अन्यथा मशकमातङ्गयोरप्यविशेषप्रसङ्गः अनन्तावयवारब्धत्वाविशेषादित्यनुमानेन निरवयवद्रव्यत्वेन परमाणुसिद्धेर्धर्मिग्राहकप्रमाणबाधितत्वात् । आगमबाधितो यथा यागादयः स्वर्गसाधनं न भवन्ति क्रियात्वादिति । उपमानबाधितो

---

बाध इत्याशयेन पृच्छति । कथमिति । धर्मिग्राहकेणेत्याह । आद्येति । त्रसरेणुः सावयवावयवारब्धः चाक्षुषद्रव्यत्वात् घटवदिति सिद्धं द्व्यणुकमाद्यावयविशब्दार्थः । अथ तदवयवानामपि कार्यद्रव्यारम्भकत्वेन सावयवत्वानुमाने बाधकमाह । अण्विति । अत्रोभयसाध्यानङ्गीकारे ऽनन्तावयवारब्धत्वाविशेषान्मशमातङ्गयोस्तुल्यपरिमाणत्वप्रसङ्ग इत्याह । अन्यथेति । अंशत्रयविशिष्टभावनावरोधात् स्वर्गसाधनत्वेनैवागमावगतानां तदसाधनत्वसाधने तेनैव धर्मिग्राहि[illegible]ा बाध इत्याह । आगमेति । एवमुपमानावगतगवयशब्दवाच्यभावस्य गोसदृशपशोस्तदवाच्यत्वानुमाने तेनैव बाध इत्याह । उपमानेति । ननु विशेषणाभा-

(१) कृष्णवर्त्मा–पा॰ B पु॰ ।

(२) महत्त्वतारतम्यवत्–पा॰ B पु॰ । महत्परिमाणतारतम्यवत्–पा॰ C पु॰ ।

यथा गोसदृशो गवयशब्दवाच्यो न भवति वस्तुत्वादिति। ननु सिद्धसाधनवदस्यापि बाधितधर्मविशिष्टत्वेनापक्षभूते धर्मिणि वर्तमानस्याश्रयासिद्धिरेव स्यात्। मैवम्। अनुष्णत्वेन द्रव्यत्वस्य व्याप्तिग्रहणायोष्णत्वाभावरूपस्यानुष्णत्वस्य निर्णयार्थमुष्णत्वं क्वचिद्धर्मिणि ग्रहीतव्यम्। स च धर्मी वह्निरेवेति व्याप्तिग्रहणसमय एव बाधिते विषये पश्चात् पक्षत्वातिपातः। तथा चोपजीव्योपजीवकयोरुपजीव्यमेवोद्भाव्यमिति न्यायाद् बाधितविषयत्वमेवोद्भाव्यमिति। सिद्धसाधने तु व्याप्तिस्थितौ पक्षधर्मत्वमेव जीवनमित्याश्रयासिद्धिरेव भवेत्। एतेन बाधितविषयस्यापि पक्षाभा-

---

वाद्विशिष्टाभाव इति सिद्धसाधनोक्तन्यायेनापि विशिष्टस्य धर्मिणोऽभावात् तद्वदेवायमप्याश्रयासिद्धः किं न स्यादिति शङ्कते। नन्विति। सत्यं तथापि परिस्फूर्तिकत्वादुपजीव्यत्वेन प्राधान्याच्च बाध एवोद्भाव्यो नाश्रयासिद्धिरिति परिहरति। मैवमिति। तत्र बाधस्य पुरःस्फूर्तिकत्वं तावदाह। अनुष्णत्वेनेति। ततस्तदुपजीवनेन धर्मिणः पक्षत्वभङ्गादाश्रयासिद्धिरित्याह। पश्चादिति। फलितमाह। तथा चेति। सिद्धसाधनस्य तु सिद्धव्याप्तिकस्यैव हेतोः पक्षधर्मतामात्रविरहिणोऽन्योपजीवित्वादाश्रयासिद्धत्वमेवेति वैषम्यमाह। सिद्धसाधने त्विति। काणादास्तु कालातीतो न हेत्वाभासः पक्षवचनस्यैव दुष्टत्वात् प्रतिज्ञाभास इति भणन्ति। तान् प्रत्याह। एते-

सतां वदन्तो निरस्ता भवन्तीति ॥ ८६ ॥

विभागोद्देशमाक्षिप्य समादधाति ।

पञ्चैव कथमाभासा विद्यते ह्यप्रयोजकः ।
इति पर्यनुयोगोऽयं तार्किकस्य न युज्यते ॥ ८७ ॥

अप्रयोजक इत्यपि कश्चिद्धेत्वाभासोऽस्तीति कथं पञ्चत्वपरिसंख्यानमित्ययं पर्यनुयोगस्तर्कव्यापारं जाननस्य न युज्यत इति ॥ ८७ ॥

कथं न युज्यते तत्राह ।

---

नेति । बाधस्यैवोक्तान्यत्वाभिधानेनेत्यर्थः । तथा च पक्षादीनां सर्वेषामपि हेतुशेषत्वेन तद्दोषाणामपि हेतुदोषपर्यवसानाद्धेत्वाभास एवायं न पक्षाभास इति भावः ॥ ८६ ॥

ननु हेत्वाभासाः पञ्चैवेति पूर्वं सिद्धान्तितं पञ्चत्वपरिसंख्यानं किमर्थमकस्मादुत्तरार्द्धे निरस्यत इत्याशङ्क्य न तन्निरस्यते किं तु स्थूणानिखननेनाक्षिप्य दृढीक्रियते पञ्चैवेत्यादिना समञ्जसमित्यन्तेन सार्द्धचतुष्टयेनेत्यवतारयति । विभागोद्देशमिति ।

नन्वप्रयोजकसद्भावे कथं हेत्वाभासानतिरेक इत्याशङ्क्य तस्यापि तदाभासत्वादिति व्याचष्टे । अप्रयोजक इति । कश्चिदिति । पूर्वोक्तविलक्षण इत्यर्थः । पञ्चत्वपरिसंख्यानं पञ्चत्वावधारणमित्यर्थः । पञ्चग्रहणस्य पञ्च पञ्चनखा इतिवत्पञ्चेतरनिषेधपरत्वादिति तद्वेदेति वेदनार्थे टकोविधानात् । तार्किकस्तर्कव्यापाराभिज्ञ इति सोल्लुण्ठनत्वसूचनाय व्याचष्टे । तर्कव्यापारं जानानस्येति ॥ ८७ ॥

यस्येत्यादिना सार्द्धश्लोकेनैतदेवोपपादयतीत्याह ।

यस्यानुकूलतर्कोऽस्ति स एव स्यात् प्रयोजकः ।
तदभावेऽन्यथासिद्धिस्तस्याः स हि निवारकः ॥८८॥
अतोऽप्रयोजकस्य स्याद्व्याप्यसिद्धेरसिद्धता ।

अनुकूलतर्कवत एव हेतोः प्रयोजकत्वात् तदभावेऽन्यथासिद्धिः स्यात् । उपाधिविधूननद्वारेणान्यथासिद्धिशङ्कानिरसनहेतुस्तर्क इत्युक्तत्वात् । अन्यथासिद्धोऽप्रयोजक उपाधिमानिति पर्यायाः । यथाहुः ।

समासमाविनाभावावेकत्र स्तो यदा तदा ।
समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजकः ॥ इति

---

कथमिति ।

तर्कविधूतान्यथासिद्धिशङ्कस्यैव हेतोः प्रयोजकत्वात् तद्रहितोऽप्रयोजकः स च निरुपाधिकसम्बन्धलक्षणव्याप्तिवैधुर्याद् व्याप्यत्वासिद्धित्वान्नातिरिच्यत इति श्लोकाभिप्रायमाह । अनुकूलेति । ननु तर्काभावमात्रेण कथमनन्यथासिद्धिरित्यत आह । उपाधीति । पक्षे विपक्षजिज्ञासाविच्छेदस्तनुग्रह इत्यत्रेति भावः । एतावता कथमप्रयोजकस्यानतिरिक्तत्वमत आह । अन्यथासिद्ध इति । अन्यप्रयुक्तव्याप्तिक इत्यर्थः । स च व्याप्यत्वासिद्ध एवेति भावः ।

अतोऽप्रयोजकस्य सोपाधिकपर्यायत्वे तावत् सम्मतिमाह । समेत्यादि । यदैकत्र साध्ये समासमाविनाभावौ साध्यसमव्याप्तिकस्तद्भिन्नव्याप्तिकश्च द्वौ हेतू सम्भवतः तयोर्मध्ये यो हीनव्याप्तिको हेतुः समेन समव्याप्तिकेनाव्याप्तश्चेदन्यथाऽनित्यत्वसाधने सावयवत्वकृतकत्वस्योपा-

केचित्तु परप्रयुक्तव्याप्त्युपजीवीत्यप्रयोजकं[1] व्यपदिशन्ति । यथाहुः ।

व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः ।
यस्मिन् सत्यमुना भाव्यमिति शक्त्या निरूप्यते ॥
अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः ।
दृष्टैरपि न तैरिष्टा व्यापकांशावधारणा ॥ इति ।

अन्ये तु सन्दिग्धव्याप्तिक इत्याहुः । यथा ।
साध्यादन्येन धर्मेण सपक्षेष्वनुयायिना ।

---

धित्वप्रसङ्गात् सोऽप्रयोजक उच्यते । तथा च सोपाधिकस्यैवाप्रयोजकव्यपदेश इति भावः ।

अथास्यान्यथासिद्धपर्यायत्वं च संवादयति । केचिदिति । परप्रयुक्तव्याप्त्युपजीवी अन्यथासिद्ध इत्यर्थः । यत्रैकेन साधनेनानेकेषां धर्माणामापाततो व्याप्तिर्दृश्यते तत्र तस्या व्याप्तेस्तेषु धर्मेषु कश्चिदेक एव धर्मः प्रयोजको निरूप्यते केनोपायेनेत्यत उच्यते । अस्मिन् साध्ये सत्येवामुना साधनधर्मेण भाव्यं नान्यथेत्येवमन्वयव्यतिरेकलक्षणया शक्त्या सामर्थ्येनेत्यर्थः । ततोऽन्ये धर्माः परप्रयुक्तव्याप्त्युपजीवकाः पूर्वोक्तप्रयोजकधर्मोपरागोपलब्धव्याप्तिका इत्यर्थः । अत एव तैर्दृष्टैरपि व्याप्तवद्दृश्यमानैरपि न साध्यावधारणमिष्यत इत्यर्थः । अत्रापि निषिद्धत्वप्रयुक्तव्याप्त्युपजीवका हिंसात्वादय एवोदाहरणम् ।

उपलक्षणं चैतत् तद्व्यपदेशान्तरं चास्तीत्याह । अन्ये त्विति । साध्यादन्येन पापसाधनत्वादिसाध्यधर्मव्यति-

---

(१) व्याप्त्युपजीवकमप्रयोजकं–पा· C पु· ।

विना पक्षे स्थितो धर्मः सन्दिग्धव्याप्तिको मतः ॥

इति ।

ततश्च सर्वथा असिद्धव्याप्तिकत्वेनासिद्धभेद एवायमप्रयोजको न तु पृथगाभास इति ॥ ८८ ॥ ऽऽ ॥

अनुकूलतर्काभाववत् प्रतिकूलतर्कसद्भावे ऽपि व्याप्यत्वासिद्ध एव हेतुः स्यादित्यत आह ।

भावे ऽपि प्रतिकूलानां तर्काणामीदृशी गतिः ॥८९॥

किं सर्वत्र नेत्याह ।

आत्माश्रयस्तथान्योन्यसंश्रयश्चक्रकाश्रयः(१) ।

---

रिक्तेन सकलसपक्षानुगतेन धर्मेण निषिद्धत्वादिना विना पक्षे स्थितो धर्मो हिंसात्वादिः परमयुक्तव्याप्तिकत्वसम्भावनया सन्दिग्धव्याप्तिको मतः कैश्चिदित्यर्थः ।

तथा च सञ्ज्ञाभेदमात्रेणाभासान्तरत्वे ऽतिप्रसङ्गात् सिद्धोऽसिद्धावन्तर्भाव इत्युपसंहारपरत्वेनातोऽप्रयोजकस्येत्येतद्व्याचष्टे । ततश्चेति ॥ ८८ ॥ ऽऽ ॥

ईदृशी गतिरिति । अनुकूलतर्करहितस्य हिंसात्वादेरिवास्पर्शवत्त्वादमूर्तत्वे मनसः क्रियावत्त्वं न स्यादिति प्रतिकूलतर्कहतस्यास्पर्शवत्त्वादेरपि अमूर्तत्वसाधनस्य व्याप्यत्वासिद्धत्वमेवेत्यर्थः ।

ननु प्रतिकूलतर्कपराहतस्य हेतोर्व्याप्यत्वासिद्धिमभिधाय तस्यैवोत्तरश्लोके स्वरूपासिद्धत्वाभिधानं व्याहतमित्याशङ्क्य सत्यम् तस्य क्वचिदपवादः क्रियत इत्यवतारयति । किं सर्वत्रेति । नन्वेते तर्काः सर्वे ऽपि स्वरूपा-

---

(१) चक्रकाद्यः-पा. A पु. ।

**अनवस्थेत्यमी तर्काः स्वरूपासिद्धिहेतवः ॥ ९० ॥**

पञ्चविधस्तर्क इत्युक्तम् । तत्रात्माश्रयादयश्चत्वारः प्रतिकूलतर्का यस्य हेतोरुद्भाव्यन्ते तस्य स्वरूपासिद्धिरेव स्यात् न व्याप्यत्वासिद्धिरिति ॥ ९० ॥

एवं चाप्रयोजकस्यासिद्धावन्तर्भावाद्विभागोद्देशः सुस्थ इत्युपसंहरति[1] ।

**आभासपरिसंख्यानमेवं सति समञ्जसम् ।**

अनध्यवसितः षष्ठो हेत्वाभास इति केचित् । यथाहुः । साध्यासाधकः पक्ष एव वर्तमानो हेतुरनध्यवसित इति तस्यासाधारणादिषु यथासम्भवमन्त-

---

सिद्धिहेतवश्चेद् व्याप्यत्वासिद्धेः किमवशिष्यत इत्याशङ्क्य तस्याश्चैकोऽवशिष्यते योऽनिष्टप्रसङ्गात्मेत्याशयवानाह । पञ्चविधस्तर्क इत्युक्तमिति । ततः किमत आह । तत्रेति । अनिष्टप्रसङ्गतर्कोद्भावने तु व्याप्यत्वासिद्धिरेवेति शेषः । तथा च प्रतिकूलतर्कसद्भावे ऽपि व्याप्यत्वासिद्धिरेवेति यदुक्तं तदपि सिद्धमिति भावः ॥ ९० ॥

अथोपसंहारवाक्यमभिप्रायाभिधानपूर्वकमवतारयति । एवं चेति ।

अथ न्यायैकदेशिमतेनाभासातिरेकमाशङ्कते । अनध्यवसित इति । तस्य तदुक्तलक्षणं चाह । यथेति । केवलव्यतिरेकिणो भिनत्ति साध्यासाधक इति । शेषमाभासान्तरनिरासार्थम् । अथ परोदाहृतानामनध्यवसितभेदानां यथायथमसाधारणादिष्वन्तर्भावान्नातिरेक इति प-

---

(१) विभागोद्देशमुक्तमुपसंहरति-पा॰ A पु॰ ।

भावान्न पञ्चभ्योऽतिरेक इति[१] ॥

हेत्वाभासवद् दृष्टान्ताभासा अपि किमिति सूत्रकारैरेव नोद्दिश्यन्ते न च लक्ष्यन्त इत्याशङ्कायामाह ।

न सूत्रितं किमिति चेद्दृष्टान्ताभासलक्षणम् ॥ ९१ ॥

अन्तर्भावो यतस्तेषां हेत्वाभासेषु पञ्चसु ।

पक्षाभासवद्दृष्टान्ताभासानामपि हेत्वाभासेष्वेव यथायथमन्तर्भावान्न ते पृथक् सूत्रिता इति ॥ ९१ ॥ ८८ ॥

तेषां कस्य कुत्रान्तर्भाव इत्यत्राह ।

---

रिहरति । तस्येति । तत्रानित्यः शब्दः आकाशविशेषगुणत्वादित्यसाधारणः । एवमन्येषामपि सर्वमनित्यं सत्त्वादित्यादीनां व्याप्यत्वासिद्धिभागासिद्धादिष्वन्तर्भावः सुगम एवेति भावः ।

ननु सारश्लोके सूत्रितशब्दप्रयोगो न युक्तः संग्रहकारस्य स्वयमसूत्रकारत्वादित्याशङ्क्य सूत्रकारस्यैवायमुपालम्भो न त्वस्येति दर्शयन्नवतारयति । हेत्वाभासवदिति । आशङ्कायामाहेति । आशङ्कामनूद्य निरस्यतीत्यर्थः ।

ननु दृष्टान्ताभासानां कथं हेत्वाभासेष्वन्तर्भाव इत्याशङ्क्य पक्षाभासवत् तल्लक्षणलक्षितत्वादिति व्याचष्टे । पक्षाभासवदिति ॥ ९१ ॥ ८८ ॥

ननूक्ता अपि हेत्वाभासा कतिचित् किमर्थमुत्तरार्धद्वये पुनरुच्यत इत्याशङ्क्याह । तेषामिति । दृष्टान्ताभा-

---

(१) यथायोगमन्तर्भावाच पञ्चभ्योऽतिरिक्त इति—पा० B पु० ।

**साधारणो विरुद्धो वा दृष्टान्ते साध्यवर्जिते ॥९२॥**
**असाधारणता हेतोस्तस्मिन् साधनवर्जिते ।**
**व्याप्त्यसिद्धिरभावे स्यादाश्रयस्य द्वयोरपि[1] ॥९३॥**

साध्यविकलो दृष्टान्तो विपक्ष एव स्यात्[2] । तत्र वर्तमानो हेतुः सपक्षान्तरवृत्तौ सत्यां पक्षत्रयवृत्तित्वात् साधारणानैकान्तिको भवति । यथाऽनित्यः शब्दः प्रत्यक्षत्वात् सामान्यवदिति । अत्र विपक्षे सामान्ये सपक्षे घटादौ पक्षे च शब्दे वर्तमानः प्रत्यक्षत्वादिति हेतुः साधारणो भवति । असत्यां तु सपक्षवृत्तौ पक्षविपक्षयोरेव वर्तमान इति विरुद्धो भवति । यथाऽनित्यः शब्दः श्रोत्रग्राह्यत्वाच्छब्दत्ववदिति । साध्यधर्मवति दृष्टान्ते साधनविकले सपक्षादपि व्यावृत्तेरसाधारणानैकान्तिको हेतुः स्यात् ।

---

सानामित्यर्थः ।

ननु साध्यविकलस्य साधारणविरुद्धयोरत्यन्तविलक्षणयोरन्तर्भावः कथमिच्छया विकल्प्यत इत्याशङ्क्य तत्र हेतोः सपक्षवृत्त्यवृत्तित्वाभ्यां द्वैविध्याद् व्यवस्थितविकल्प इति व्याचष्टे । साध्यविकल इत्यादि । द्वितीयार्द्धं व्याचष्टे । साध्यधर्मवतीति । ननूदाहृते साधनविकले हेतोः पक्षमात्रवृत्तित्वादसाधारण्यमस्तु यस्तूदाहृतदृष्टान्तव्य-

(१) तयोरपि–पा· B पु· ।
(२) विपक्ष एव भवति–पा· B पु· ।

यथा नित्यः शब्दः आकाशविशेषगुणत्वादात्मवदिति । ननु सकलसपक्षादपि व्यावृत्तो ह्यसाधारणो भवति केषुचित् सपक्षेषु वर्तमानो दृष्टान्ततया निर्दिष्टे सपक्षे चावर्तमानः कथमसाधारणः स्यात् । यथा नित्यः शब्दोऽमूर्तत्वात् परमाणुवदिति । सत्यमयमसाधारणो न भवति सपक्षेष्वाकाशादिषु वृत्तेः । तथाप्यनुपदर्शितव्याप्तिको हेतुः स्यादिति हेत्वाभासान्तर्गत एवेति भावः । दृष्टान्तधर्मिण एवाभावे तस्मिन् सत्येव द्वयोः[1] साध्यसाधनयोरभावे ऽप्यनुपदर्शितव्याप्तिको[2] हेतुः स्यात् । यथाऽनित्यः शब्दः प्रत्यक्षत्वादिति यथाकाशं यथा वा तत्कुसुममिति । ननु तस्यामेव प्रतिज्ञायां कृतकत्वादिति हेतुमभि-

---

क्ताववर्तमानोऽपि सपक्षान्तरे वर्तते तस्यासाधारणत्वासम्भवाद् दृष्टान्ताभासत्वमेवेत्याशयेन शङ्कते । नन्विति । तस्यासाधारण्याभावे ऽपि स्वनिर्दिष्टदृष्टान्तव्यक्तावनुपदर्शितव्याप्तिकत्वाद् व्याप्यत्वासिद्धावन्तर्भाव इत्याह । सत्यमिति । यद्यप्यत्रामूर्तत्वस्य पक्षत्रयवृत्तित्वादनैकान्तिकत्वं चास्ति तथाप्यपुरःस्फूर्तिकत्वादनुद्भाव्यं तत् उभयविकलाश्रयविकलयोस्तु व्याप्यत्वासिद्धावन्तर्भाव इति तृतीयार्द्धेनोच्यत इत्याह । दृष्टान्तधर्मिण एवेति । कचिदनयो[3]रनन्तर्भावमाशङ्कते । नन्विति । अतिपीडा-

---

(१) तयोः—पा॰ D पु॰ । (२) असिद्धव्याप्तिको—पा॰ B पु॰ ।
(३) साध्यसाधनविकलाश्रयविकलयोः ।

धाय गगनतत्कुसुमयोर्निदर्शितयोर्न व्याप्तसिद्धिरिति दृष्टान्ताभासमात्रमत्रेति चेत् न अत्राप्यनुपदर्शितव्याप्तिको हेतुः स्यात् अतिपीडायां[1] व्याप्यत्वासिद्धिरेव। एवं च वैधर्म्यदृष्टान्ते ऽपि साध्याव्यावृत्तेरसाधारण्यं साधनाव्यावृत्तेर्विरोधः साधारण्यं वा उभयाव्यावृत्तावाश्रयाभावे ऽपि व्याप्यत्वासिद्धिः। ततश्च दृष्टान्ताभासानां हेत्वाभासान्तर्भावान्नासूत्रितत्वोपालम्भ इति ॥ ९२ ॥ ९३ ॥

छलं सामान्यतो लक्षयति ।

---

यामिति। कृतकत्वानित्यत्वयोर्व्याप्तिसद्भावे ऽपि निर्दिष्टदृष्टान्तव्यक्तयोरनुपदर्शितव्याप्तिकत्वमात्रेण कथञ्चिद् व्याप्यत्वासिद्धिरेवेत्यर्थः। अथ साधर्म्यदृष्टान्ताभासवद् वैधर्म्यदृष्टान्ताभासानामपि हेत्वाभासान्तर्भाव एवेत्याह। एवं च वैधर्म्येति। तत्र पूर्वोक्तसाधनविकलोदाहरण[2]मेवात्र साध्याव्यावृत्तस्योदाहरणं साध्यविकलोदाहरणं[3] च साधनाव्यावृत्तस्येति द्रष्टव्यम्। उभयेत्यादि स्पष्टम्। उपसंहरति। ततश्चेति। इति हेत्वाभासपदार्थः ॥ ९२ ॥ ९३ ॥

ननु छलस्य बहुशो लक्षणानि वक्ष्यन्ते तत् किमुच्यते किञ्चिदर्थमित्यादिनेत्यत आह। छलमिति। सामान्यलक्षणं विना विशेषलक्षणाप्रवृत्तेः प्रथमं सामान्यलक्षणमुच्यत इत्यर्थः।

---

(१) अत्यन्तपीडायां–पा॰ B पु॰ ।

(२) शब्दो नित्य आकाशविशेषगुणत्वात् आत्मवत् ।

(३) अनित्यः शब्दः प्रत्यक्षत्वात् सामान्यवत् साधारण्यम् अनित्यः शब्दः श्रोत्रग्राह्यत्वात् शब्दत्ववत् ।

**किञ्चिदर्थं[1]मभिप्रेत्य प्रयुक्ते वचने पुनः ।**
**अनिष्टमर्थमारोप्य तन्निषेधश्छलं मतम् ॥ ९४ ॥**

अर्थान्तरविवक्षया वाक्यप्रयोगे वक्तुरनभिप्रेतमेवार्थं तदर्थत्वेनाध्यारोप्यारोपितार्थदूषणं छलम् । अर्थश्चाभिधेय औपचारिकस्तात्पर्यविषयश्च विवक्षित इति तेन छलत्रयसंग्रह इति[2] । तदुक्तम् । वचनविघातोऽर्थविकल्पोपपत्त्या छलमिति । वाक्यस्य विविधकल्पना नानात्वकल्पनोपपत्तिकारणतया वचनविघातः छलमित्यर्थः ॥ ९४ ॥

छलानि परिसङ्ख्प्टे । तच्च त्रेधा वाक्छलादिभेदात् । तदुक्तम् । तत्त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ।

**तत् तु त्रेधा वाक्छलादिभेदतस्तत्र वाक्छलम् ।**
**अभिधावैपरीत्येन कल्पितार्थस्य बाधनम् ॥९५॥**

---

किञ्चिदन्यमेव । अनिष्टमनभिप्रेतम् । तन्निषेध आरोपितार्थनिषेधः । तदेतत्सर्वं व्यनक्ति । अर्थान्तरेत्यादि । नन्वर्थशब्दस्याभिधेयवचनत्वादिदं लक्षणमनभिधेयार्थे वाक्छलादन्यत्राव्याप्तमित्याशङ्क्याह । अर्थश्चेति । मुख्यामुख्यसाधारणार्थोऽयमर्थशब्द इत्यदोष इत्यर्थः । अर्थविकल्पोपपत्त्या अर्थान्तरकल्पनयेत्यर्थः ॥ ९४ ॥

---

(१) कमप्यर्थं–पा॰ B पु॰ ।
(२) इति सर्वसङ्ग्रह सिद्धिरिति–पा॰ B पु॰ ।

अर्थान्तरविषयामभिधामभिप्रेत्य प्रयुक्तस्य शब्दस्यानभिमतार्थान्तरविषयामभिधामारोप्य कल्पितस्याभिधेयस्य निषेधो वाक्छलम् । अभिधेयान्तरविषयतया प्रयुक्तस्य शब्दस्याभिधेयान्तरमारोप्य तन्निषेध इत्यर्थः । यथाहुः । वाच्यान्तरकल्पना यत्र तद्वाक्छलमिति । तदुक्तम् । अविशेषाभिहिते ऽर्थे वक्तुरभिप्रायादर्थान्तरकल्पना वाक्छलमिति । त-

---

नन्वभिधावैपरीत्यमौपचारिकत्वं तच्च वाक्छले न सम्भवतीत्याशङ्क्याभिधान्तराश्रयणमिति व्याचष्टे । अर्थान्तरेति । ननु अनेकार्थस्यापि शब्दस्य वृत्तिद्वयायोगात् एकैवाभिधेति कथमभिधान्तरवाचो युक्तिरित्याशङ्क्य सत्यमभिधेयभेदाद्भेदव्यपदेश इत्याशयेन वास्तवमर्थमाह । अभिधेयान्तरेति । अथवा अस्त्वभिधाभेदः तथापि लक्षणे कल्पितार्थस्य बाधनमित्ययुक्तम् अभिधावैपरीत्यपदेनेत्यभिधोपादानसामर्थ्याद् विपरीताभिधादूषणस्यैव लक्षणत्वावगतेरभिधेयार्थदूषणायोगादित्याशङ्क्य तत्राप्यभिधेयपरत्वमेव विवक्षितम्[1] तत्परिहारेण केवलाभिधादूषणस्य दुष्करत्वादित्याशयेन तात्पर्यार्थमाह । अभिधेयान्तरमिति । वाच्यान्तरकल्पनेति । वाच्यान्तरे प्रयुक्तस्येति शेषः । कल्पना कल्पयित्वा तन्निषेध[2] इत्यर्थः । अविशेषेति । अर्थद्वये ऽप्येकरूप्यमविशेषः तेनाभिहिते ऽर्थे प्रयुक्ते

---

(१) अभिधावैपरीत्यमत्राभिधेयपरमेव विवक्षितमिति भावः ।
(२) तत्पदेन वाच्यान्तरम् ।

द्यथा आढ्योयं नवकम्बलवत्त्वादिति । अत्र नवशब्दस्य नूतनत्वमभिप्रेत्य प्रयोगे सङ्ख्याविशेषमभिधेयमारोप्य निषेधति । कुतोऽस्य नव कम्बला एक एव कम्बलः प्रत्यक्षसिद्ध इति ॥ ९५ ॥

सामान्यच्छलनेतत् स्यादतिसामान्ययोगतः ।
तात्पर्यवैपरीत्येन कल्पितार्थस्य बाधनम् ॥ ९६ ॥

उत्तरमर्द्धं लक्षणांशः । सामान्यच्छलमिति लक्ष्यनिर्देशः । अतिसामान्ययोगत इति छलवादिनः प्रत्यवस्थानबीजम् । एतदुक्तं भवति । निर्दिष्टस्य कस्यचित् सामान्यस्यानभिमतमेव हेतुत्वादिकं तात्पर्यविषयमारोप्य तस्यानभिमतेष्वेव विशेषेषु योगदर्शनादनैकान्तिकत्वादिदोषोद्भावनमिति । यथा अयमहो

---

शब्द इत्यर्थः । अभिप्रायादभिप्रेतार्थादित्यर्थः । कल्पना आरोपः गतमन्यत् । वाक्छलमुदाहरति । यथेत्यादि ॥ ९५ ॥

अथ सामान्यच्छललक्षणमाह । सामान्येति । भेदान्तराद्भिनत्ति । तात्पर्यवैपरीत्येनेति ।

अतिसामान्ययोगत इत्यस्य लक्षणान्तःपातित्वशङ्कानिरासाय लक्ष्यलक्षणांशौ निर्द्धारयति । उत्तरमर्द्धमित्यादि । तर्हि तत्किमर्थमत आह । अतिसामान्येति । अतिक्रान्तमभिमतविषयवर्तिसामान्यमतिसामान्यं तद्योगत इत्यर्थः । कथमस्य तद्बीजत्वमित्याशङ्क्य यथैतत् तथा दर्शयति । एतदुक्तमिति । उदाहरति । यथेत्यादि ।

ब्राह्मणोऽनूचान इत्युक्ते किमत्राद्भुतं ब्राह्मणोऽनूचान इति अत्र ब्राह्मणस्यानूचानत्वसम्भावनामात्रेण कश्चिद्वदति । तत्र ब्राह्मणत्वस्यानूचानत्वे हेतुत्वं तात्पर्यविषयमारोप्य छलवादी प्रत्यवतिष्ठते । न ब्राह्मणत्वमनूचानत्वे हेतुर्निराकृतिभिरनैकान्तिकत्वादिति । तदुक्तम् । सम्भवतोऽर्थस्यातिसामान्ययोगादसद्भूतार्थकल्पना सामान्यच्छलमिति ॥ ९६ ॥

**उपचारप्रयोगेषु गौणलाक्षणिकेषु यः ।**
**मुख्यार्थासम्भवाद्बाध उपचारच्छलं तु तत्[1]॥९७॥**

**शब्दानां शक्तिवशादेवाहत्य प्रतीयमानोऽर्थो**

---

सम्भवतोऽर्थस्य ब्राह्मणादौ सम्भावनामात्रेणोक्तस्यार्थस्यानूचानत्वादेरतिसामान्ययोगात् उक्तब्राह्मणत्वादिसामान्यस्यानूचानत्वातिक्रमेण व्रात्यादौ योगदर्शनात् असद्भूतार्थकल्पना अनभिप्रेतहेतुत्वारोपेण विघट्टनं सामान्यच्छलमिति सूत्रार्थः ॥ ९६ ॥

अथोपचारच्छललक्षणं व्याख्यातुं पठति । उपचारेति । गौणलाक्षणिकभेदेन द्विविधेष्वप्यौपचारिकप्रयोगेषु प्रयोक्तुरविवक्षितं मुख्यार्थमारोप्य तस्यासम्भवदोषेण दूषणमुपचारच्छलमिति श्लोकार्थः ।

अथ कोऽयं मुख्यार्थः क औपचारिकः कतिविधश्चेत्याकाङ्क्षायां सर्वं दर्शयति । शब्दानामित्यादि । शक्तिवशादभिधासामर्थ्यादित्यर्थः । आहत्येति । अन-

---

(१) छलं भवेत्–पा· A पु· ।

मुख्यः । यथा गवादिशब्दानां गोत्वादिजातिक्रोडीकृता व्यक्तिः । औपचारिकस्तु मुख्यार्थद्वारा प्रतीयमानः। उपचारश्च द्विविधः गौणलक्षणाभेदात् । तत्र लक्षणा नाम मुख्यार्थसम्बन्धिन्यर्थान्तरे वृत्तिः । यथा गङ्गायां घोषः प्रतिवसति इत्यत्र गङ्गाशब्दस्य तत्सम्बन्धिनि तीरे वृत्तिः गौणी तु मुख्यार्थवर्तिगुणसामान्ययोगिन्यर्थान्तरे वृत्तिः । यथा सिंहो देवदत्त इत्यत्र सिंहवर्तिशौर्यादिगुणसामान्ययोगिनि देवदत्ते सिंहशब्दस्य वृत्तिः । यथाहुः ।

अभिधेयाविनाभूतप्रतीतिर्लक्षणेष्यते ।
लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता ॥ इति[१] ।

---

न्यव्यवधानेनेत्यर्थः । जातिक्रोडीकृता व्यक्तिरिति । न तु मीमांसकवज्जातिरेवेत्यर्थः । मुख्यार्थद्वारेति । मुख्यार्थेनैव द्वारा उपायेनेत्यर्थः । तेन हि स्वशब्दाभिहितेनाप्यनुपपन्नत्वात् स्वसम्बन्धी स्वगुणयोगी वार्थः प्रत्याय्यते स शब्दस्य औपचारिकोऽर्थः । स्फुटमन्यत् ।

अत्र लक्षणागौण्योर्भट्टसम्मतिमाह । अभिधेयेत्यादि। मुख्यार्थानुपपत्तौ तत्सम्बन्धार्थान्तरप्रतीतिर्लक्षणा । लक्ष्यमाणेति । जातिरेव शब्दार्थः तदाक्षेप्या व्यक्तिरिति मीमांसकाः । तत्क्रोडीकृताव्यक्तिः शब्दार्थ इति नैयायिकाः । उभयथापि लक्ष्यमाणतत्तद्गुणयोगिन्यर्थान्तरे

---

(१) रिष्यति गौणतेति-पा० C पु० ।

तत्र गौणं लाक्षणिकं वार्थमभिप्रेत्य वाक्यप्रयोगे वक्तुरनभिप्रेतमेव मुख्यार्थमारोप्य तदसम्भवेन दूषणाभिधानमुपचारच्छलम् । यथा गङ्गायां घोषः प्रतिवसति सिंहो देवदत्त इति वा प्रयुक्ते कथं जले घोषवासः कथं देवदत्तः सिंह इति वा प्रत्यवस्थानम् । अभिधातात्पर्यार्थोपचारवृत्तिव्यत्ययेन कल्पितार्थनिषेध इति त्रयाणां सङ्क्षेपतो लक्षणम् । छलं च

---

सादृश्यनिबन्धना वृत्तिर्गौणीत्यर्थः ।

अथैवं लक्षणवाक्यस्थपदार्थमभिधाय तद्वाक्यार्थमाह । तत्र गौणमित्यादि । उभयमुदाहरति । यथेति । अथ शिष्याणां सुखबोधार्थं छलत्रयस्यापि लक्षणत्रयं सङ्गृह्णाह । अभिधेति । अभिधावृत्तिव्यत्ययेनोपचारवृत्तिव्यत्ययेनेत्यादि योज्यम् । तथा च वाच्यान्तरे प्रयुक्तस्य शब्दस्याविवक्षितवाच्यान्तरारोपेण तथौपचारिकार्थस्यानभिमतमुख्यार्थारोपेण सम्भावनामात्राभिप्रायेणोपन्यस्तस्यार्थस्य हेतुत्वारोपेण वचनविघाताः क्रमेण वागुपचारसामान्यच्छलानीत्यर्थः । अथैषामुद्भवोद्भावनयोरवसरमाह । छलं चेति । अत्र नवकम्बलोऽयं माणवकः मञ्चाः क्रोशन्तीति च वादिना प्रयुक्ते ततो द्वितीयकक्षायां प्रतिवादिना वागुपचारच्छलयोरुत्क्रमेणोद्भवः ततस्तृतीयकक्षायां वादिनोद्भावनं सामान्यच्छलस्य तु ब्राह्मणोऽयमनूचान इति वादिनोक्ते क्रमादुद्भवः तदुत्तरकक्षायां प्रतिवादिनोद्भावनमित्यर्थः । तत्र यथाकालमनुद्भावने छलप्रयोक्तुर्निरनुयो-

द्वितीयादिकक्षायां[1] सम्भवति उत्तरकक्षायामुद्भाव्यमिति ॥ ६० ॥

इति श्रीवरदराजविरचिते तार्किकरक्षाव्याख्याने सारसंग्रहे प्रथमः परिच्छेदः ॥

---

ज्यानुयोगः अन्यथेतरस्य पर्यनुयोज्योपेक्षणमुभयोः प्रमादे पङ्क्त्यनन्तरं सभ्यैरुद्भाव्यं फलं तु छलप्रयोगस्य परव्यामोहनात् पाक्षिकविजयलाभ इति स्थितिः । इति छलपदार्थः ॥ ९७ ॥

इति पदवाक्यप्रमाणपारावारपारीणश्रीमहोपाध्यायकोलाचल[2]श्रीमल्लिनाथसूरिविरचितायां वरदराजीयव्याख्यायां[3] प्रथमः परिच्छेदः समाप्तः ॥

श्रीभद्रकाल्यै नमः ॥

---

(१) कक्ष्यासु—पा॰ B पु ।
(२) लोकावल—पा E पु ।
(३) वरदराजविरचितसारसंग्रहव्याख्याया निष्कण्टकासमाख्याया—पा F पु ।

# सटीकतार्किकरक्षायाम्

## द्वितीयः परिच्छेदः ।

अथ जातिः । तत्र सामान्यलक्षणसूत्रम् । सा-

---

## द्वितीयपरिच्छेदस्य

### ज्ञानपूर्णकृता

### लघुदीपिका टीका[१] ।

ॐनम परमात्मने ।

चतुर्दशपदार्थात्मपरिच्छेदार्थविस्तृतिः ।
कृता जातिपरिच्छेदव्याख्यानमधुनोच्यते( ) ॥

अथ जातिः छलानन्तरमुद्देशक्रमप्राप्ता जातिः सामान्यतो विशेपतश्च लक्ष्यत इति शेपः । तत्र लक्ष्यमा-

---

(१) मल्लिनाथकृतनिष्कण्टकाटीकाया पुस्तकत्रय सम्पादित मया पर तु त्रिप्वपि पुस्तकेपु प्रथमपरिच्छेदान्ते छलपदार्थनिरूपणानन्तर समाप्तिर्दृश्यते ऽतोऽत्र द्वितीयतृतीयपरिच्छेदयोर्ज्ञानपूर्णकृता लघुदीपिकाख्या टीका सन्निवेश्यते । कि तु मल्लिनाथेन द्वितीयतृतीयपरिच्छेदौ जातिनिग्रहस्थाननिरूपकौ न व्याख्यातावित्ति न भ्रमितव्यम (पृ १९० प १५) एतत्सर्वं जातिपरिच्छेदे स्फुटीभविष्यतीति, तथा (पृ २०७ प ११) एतच्च निग्रहान्ते स्फुटीभविष्यतीति मल्लिनाथेनैव निष्कण्टकायामुक्तत्वात । प्रथमपरिच्छेदस्य लघुदीपिका स्वन्ते मुद्रिता भविष्यतीत्यवगन्तव्यम ॥

(२) प्रमाणादिच्छलान्तचतुर्दशपदार्थनिरूपकस्य प्रथमपरिच्छेदस्य व्याख्यान कृतम इदानीं जातिपरिच्छेदो द्वितीयो व्याख्यायत इति भाव ।

त्युभावपि समौ भविष्यावः । यदि सदुत्तरेणायमस्मदुक्तां जातिमुद्धरेत् तदा ममैव पूर्वमापन्नः पराजयोऽवतिष्ठत इति पाक्षिकसाम्यापादनबुद्ध्या जातिवादिनः प्रत्यवस्थानमिति । आचार्यास्तु यदुत्तरं परकीयसाधनस्येव स्वस्यापि व्याघातकं भवति सा जातिरुत्तरस्यापि व्याघातकत्वेन स्वपरसाधनसाम्यं समशब्दप्रवृत्तिनिमित्तमाहुः । यथा जात्युत्तरं परसाधनमिव स्वात्मानमपि व्याप्नोति अतः स्वपरसाम्यात् सममित्युच्यत इति । अनेन स्वव्याघातकरमुत्तरं जातिरित्युक्तं भवति ।

तत्र तावद्यथावार्त्तिकं लक्षणमाह ।

**प्रयुक्ते स्थापनाहेतौ दूषणाशक्तमुत्तरम् ।**
**जातिमाहुः**

अत्र सिद्धत्वे ऽपि दूषणासामर्थ्यमशक्तिः । ततश्च छलादिव्यवच्छेदसिद्धिरिति ।

अथ न्यायाचार्याभिमतं लक्षणमाह ।

**अथान्ये तु स्वव्याघातकमुत्तरम् ॥ १ ॥**

---

कालात्ययापदिष्टप्रकरणसामाभ्यां प्रत्यवस्थानं साधर्म्यवैधर्म्याभ्यामपि भवतीत्यजातौ जातिलक्षणम् तथोत्कर्षादिसमानां साधर्म्य एवैकपक्षे पक्षपात इत्याशङ्क्याह । तत्र तावदिति । यथावार्त्तिकमित्यत्र योजना चेत्यध्याहारः (?)।

दूषणाशक्तं दूषणेनाव्याप्तम् । स्थापनपरं व्याख्यातप्रायमिदं पद्यम् । अतिरोहितार्थमित्यर्थः ।

व्याख्यातवरं चेदमिति । अत्र जातीनां विभागोद्देशसूत्रम् । साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमा इति । द्वन्द्वात् परः श्रूयमाणः प्रत्येकमभिसम्बध्यत इति समशब्दस्य सर्वैः साधर्म्यादिभिः सम्बन्धः । सर्वसम्बन्धार्थमेव निग्रहस्थानवत् परस्परानपेक्षा अपि जातयः समासेनोद्दिश्यन्ते प्रत्येकावृत्तौ गौरवप्रसङ्गादिति ॥ १ ॥

अथ प्रतिधर्मसमाया जातेर्लक्षणमाह ।

**अनभ्युपेतयुक्ताङ्गात् प्रमाणात् प्रतिरोधतः ।**
**प्रत्यवस्थानमाचख्युः प्रतिधर्मसमं बुधाः ॥ २ ॥**

---

विभागोद्देशसूत्रम् न तु लक्षणैकपरमिति भावः । सर्वास्वपि जातिषु समशब्दं प्रयुञ्जानस्येति पूर्वोक्तमर्थं समर्थयति (?) । द्वन्द्वात्पर इति । जातिनिग्रहस्थानभेदानां पौर्वापर्यं नैवापेक्षिकं न तु पूर्वापरार्थसम्बन्धाधीनमित्याह । सर्वसम्बन्धार्थमेवेति । परस्परापेक्षा न प्रमाणप्रमेयादिभेदानामिति पूर्वलक्षणसापेक्षा इत्यर्थः (!) । तर्हि साधर्म्यवैधर्म्यसमप्रतिजातिशब्दान् किं न प्रयुङ्क्त इत्यत आह । प्रत्येकावृत्ताविति ॥ १ ॥

उदयनेन प्रथमजातिद्वयस्यैका सञ्ज्ञा नैमित्तिककृता तां स्मारयति । अथ प्रतिधर्मसमाया इति ।

अनभ्युपेतयुक्ताङ्गादिति प्रकरणसमाख्यहेत्वाभा-

येन केनचित्प्रमाणेन वादिना साध्योपसंहारे कृते अनभ्युपेतयुक्ताङ्गेन प्रतिप्रमाणेन प्रतिरोधतः प्रत्यवस्थानं प्रतिधर्मसमः। अत्रावश्याभ्युपगन्तव्यानां तत्प्रमाणाङ्गानां वास्तवसद्भावाभावे ऽपि सद्भावाभिमानमात्रमपि नास्ति तेन सदुत्तरप्रकरणसमाद् व्यवच्छेदसिद्धिः तत्र सद्भावाभिमानस्य विद्यमानत्वात्। प्रकरणसमाया जातेर्व्यवच्छेदायोक्तं प्रतिरोधत इति। तत्र बाधेन प्रत्यवस्थानस्य वक्ष्यमाणत्वादिति ॥ २॥

ननु महतीयमपूर्वा प्रक्रिया यत् सूत्रकारादिभिरनुद्दिष्टामलक्षितां च प्रतिधर्मसमाभिधानां जातिं भवन्तो लक्षयन्तीत्यत आह ॥

**साधर्म्यवैधर्म्यसमौ तद्भेदावेव सूत्रितौ।**

सूत्रकारस्यापि प्रथमतः साधर्म्यवैधर्म्यसमावुद्देशपूर्वं लक्षयतस्तद्द्वारा प्रतिधर्मसमायामेव तात्पर्यम्। तयोस्तदवान्तरभेदत्वादिति किमर्थं तर्हि मुख्यमेव प्रतिधर्मसममुपेक्ष्यावान्तरभेदोपादानमिति

---

सत्प्रतिपक्षव्युदासः प्रमाणादिति प्रत्यक्षादेः सर्वस्मात् प्रमाणादियं जातिः प्रवर्तत इति दर्शितं भवति। प्रतिरोधत इति प्रकरणसमाख्यजातेर्व्यवच्छेदः। स साध्यस्योपसंहारे प्रथममेव प्रतिपाद्यते। उद्देशपूर्वं लक्षयतः सामान्यविशेषसूत्राभ्यामशेषलक्षणं च कुर्वतः ते च उत्कर्षापकर्षसमादीनामवान्तरभेदाश्च स्वयमेवेति भाष्यवार्त्तिकादिषु कृतश्रमैः शिष्यैर्ज्ञातव्या इत्यर्थः ॥ २ ॥

चेत् तत्राह ।

**अवान्तरभिदाः सन्ति सर्वत्रेति प्रसिद्धये ॥ ३ ॥**

सर्वास्वपि जातिषु वहवोऽवान्तरभेदाः सन्ति । यथा तावत् प्रतिधर्मसमायां साधर्म्यवैधर्म्यसमौ ते च स्वयमेवोहनीया इति प्रदर्शनार्थमवान्तरभेदोपादानमिति ॥ ३ ॥

अवान्तरभेदत्वानङ्गीकारेण तयोः स्वतन्त्रजातित्वाभ्युपगमे ऽनिष्टप्रसङ्गमाह ।

**तौ चेत् स्वतन्त्राभिमतौ प्रत्यक्षादेः प्रमाणतः । एवंविधः प्रसङ्गः स्याज्जातित्वेन न सूत्रितः ॥ ४ ॥**

तदा ह्यनङ्गीकृतयुक्ताङ्गेन प्रत्यक्षादिना प्रमाणेन प्रतिरोधतः प्रत्यवस्थानस्य जात्यन्तरानन्तर्भावादजातित्वं स्यात् । तच्चायुक्तम् असदुत्तरत्वात् छलाद्यनन्तर्भावाच्चेति । अत्र सूत्रम् । साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमाविति । तदिति साध्यपरामर्शः । उपसंहारकर्मतया

---

तदा ह्यनङ्गीकृतेति । यदानुमानाभाससाधर्म्यवैधर्म्याभ्यामेव प्रत्यवस्थानमिमे अजाती स्यातां तदा ह्येवं सति समापन्नमिति भावः । जात्युत्तरानन्तरभावात् साधर्म्यादिचतुर्विंशतिजातीनां एवंविधप्रसङ्गस्य च लक्षणैकभावादित्यर्थः । कथमप्रस्तुतस्य तच्छब्देन परामर्श इत्यत्राह । उपसंहारकर्मतयेति । उपसंहारः समर्थनं तत्कर्मतया समर्थनीयत्वेन । सामान्यलक्षणसूत्रात् साधर्म्यवैधर्म्याभ्यां

प्रकृतत्वात्। उपपत्तेरिति तादर्थ्ये षष्ठी। साधर्म्यवैधर्म्याभ्यामित्यावर्तनीयम्। सामान्यलक्षणसूत्रात् प्रत्यवस्थानपदमनुवर्तनीयम्। लक्ष्यलक्षणपदानां यथासङ्ख्येन सम्बन्धः। स्वपक्षसाधनपरपक्षप्रतिषेधाभ्यां द्विभागेन प्रत्यवस्थाने प्रतिषेधभागेन जातित्वमिति सूचयितुं पुल्लिङ्गनिर्देशः। सामान्यलक्षणेनैव सदुत्तरप्रकरणसमत्वोद्भावनव्यवच्छेदः ततश्चायमर्थः सम्पद्यते साधर्म्येण वैधर्म्येण द्वाभ्यां वा साध्योपसंहारे वादिना कृते साध्यधर्मविपर्ययधर्मसिद्ध्यर्थमनङ्गीकृतयुक्ताङ्गेन साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः। तथोपसंहारे तथाविधेन वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसम इति। यथा अनित्यः शब्दः कृतकत्वात् घटवदित्युपसंहारे नैतदेवमस्ति ह्याकाशेनापि साधर्म्यममूर्तत्वं तद्वन्नित्यः किं न स्यात् न चेदेवमनित्योऽपि न स्यादविशेषादिति साधर्म्यसमः। तस्मिन्नेवोपसंहारे

---

प्रत्यवस्थानं जातिरित्यस्माल्लक्षणपदानां लक्ष्यपदयोर्लक्षणपदयोश्च पुल्लिङ्गनिर्देशः समाहृत्योक्तिः। सामान्यलक्षणेन दूषणासक्तं स्वव्याघातकं चोत्तरं जातिः अनेन सह उत्तरेति हेत्वाभासरूपप्रकरणसमस्य दूषणाशक्ततायभावात् तेन तद्व्यवच्छेद इत्यर्थः। ततश्च सूत्राङ्गानामेव संविधानसद्भावात् तथाविधेनाङ्गीकृतयुक्ताङ्गेन साधर्म्येणैव चेति नियमः। प्रत्यवस्थानेन तु साधन इत्याह। तस्मिन्नेवेति। प्र[illegible] द्रष्टव्यम्। वैधर्म्येणोपसंहारे कृते साध-

घटवैधर्म्याच्छ्रावणत्वान्नित्यः किं न स्यात् इति वैधर्म्यसमः । एवं वैधर्म्येण द्वाभ्यां चोपसंहारे साधर्म्येण च प्रत्यवस्थानं प्रत्येकं च द्रष्टव्यम् । तथा प्रत्येकं समुच्चिताभ्यां चोपसंहारे समुच्चिताभ्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं चोदाहर्तव्यम् । अनुमानेन साध्योपसंहारे प्रत्यक्षेणापि प्रत्यवतिष्ठते । यथा पूर्वस्मिन्नेव प्रयोगे स एवायं गकार इति प्रत्यभिज्ञाप्रत्यक्षेण नित्यः किं न स्यात् प्रमाणत्वाविशेषादिति । तथा शब्दोपमानाभ्यां प्रत्यवस्थानमुदाहर्तव्यम् । सर्वासामपि जातीनां सप्ताङ्गानि वक्ष्यति । अत्र

---

र्म्येण प्रत्यवस्थानं साधर्म्यसमः । वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः द्वाभ्यां साधर्म्यवैधर्म्याभ्यामुपसंहारे साधर्म्येण प्रत्यवस्थानं साधर्म्यसमः वैधर्म्येण प्रत्यवस्थानं वैधर्म्यसमः इति प्रस्तुतम् । शब्दानित्यत्वानुमाने ऽन्यथोदाहर्तव्यमित्यर्थः । अथ प्रतिधर्मसमयोर्विशेषान्तरसमामाह । तथा प्रत्येकमिति । साधर्म्येण वा वैधर्म्येण वा उभाभ्यां वोपसंहारे कृते उभाभ्यां प्रत्यवस्थानं चोक्तोदाहरणे साधर्म्यवैधर्म्यसमाख्य एकः प्रतिधर्मसमविशेषो द्रष्टव्य इत्यर्थः । तथा शब्दोपमानाभ्यामिति । शब्दानित्यत्वानुमाने प्रयुक्ते नाचिकेतमुपाख्यानं मत्पुत्रोक्तं सनातनमित्याद्यागमादनित्यः किं न स्यात् । तथा तस्मिन्नेव प्रयोगे अनेन सदृशः पूर्वं तेनोक्तः शब्द इत्युपमानेन नित्यः किं न स्यादित्यादिप्रत्यवस्थानमूहनीयमित्यर्थः । प्रत्यक्षादिना प्रत्यवस्थानस्य प्रतिधर्मसम इत्येव सञ्ज्ञा द्रव्याविषयवृत्तित्वं

प्रतिधर्मसमो लक्ष्यः अनभ्युपेतयुक्ताङ्गेन प्रमाणेन प्रतिरोधतः प्रत्यवस्थानमिति लक्षणं युक्ताङ्गहीनप्रतिप्रमाणोपलम्भ उत्थानबीजं सत्प्रतिपक्षत्वमारोप्यम् तद्भ्रान्तिः फलम् प्रमादः प्रतिभाक्षयश्चावसरः सर्वत्रेति वक्ष्यति । दुष्टत्वमूलं तु द्विविधं साधारणमसाधारणं चेति । तत्र साधारणं स्वव्याघातत्वम् । असाधारणं तु त्रिविधम् । युक्ताङ्गहीनत्वमविषयवृत्तित्वं चेति । अत्र साधारणं तावन्नेदं स्वसाध्यसाधकम् अनङ्गीकृतयुक्ताङ्गेन प्रमाणेन प्रतिरुद्धत्वादिति हि जात्यात्मकः प्रतिषेधः । स च स्वात्मानमपि व्याहन्ति नेदं दूष्यदूषकं तथाविधप्रतिप्रमाणप्रतिरुद्धत्वादिति । असाधारणं तु युक्ताङ्गहीनत्वं युक्तं व्याप्त्याद्यङ्गमनपेक्ष्य प्रवृत्तत्वादिति । तत्र सूत्रं गोत्वाद्गोसिद्धिवत् तत्सिद्धिरिति । यथा व्याप्तात् तद्गोत्वादेव गोव्यवहारसिद्धिः नाव्याप्तात् पशुत्वादेः तथा व्याप्तादेव कृतकत्वादिहेतोः साध्यसिद्धिर्नाव्याप्तादमूर्तत्वादेरिति यु-

---

हीनार्थकाङ्क्षाभावे सत्यदूष्ये दूषणाभिधानमङ्गीकृत्य युक्ताङ्गं यथा व्याप्तादिति । अयं पिण्डो गौरिति व्यवहर्तव्यः गोत्वात् व्यतिरेकेणाश्ववदिति । अत्र गोव्यवहाराख्यसाध्येनाविनाभूतत्वात् गोत्वादिति हेतोर्यथा साध्यसिद्धेर्यथा च साध्यव्यभिचारिणः पशुत्वादिति हेतोर्न गोव्यवहारसिद्धिरेवमित्यर्थः । नाव्याप्तादिति । अमूर्तत्वा-

क्षाङ्क्षानिप्रदर्शनं सूत्रार्थः ॥ ४ ॥

कस्याप्यनिष्टधर्मस्य वादिसाधनशक्तितः ।
दृष्टान्तात् पक्ष उत्कर्ष उत्कर्षसम उच्यते ॥ ५ ॥

दृष्टान्तधर्मिणि दृष्टस्य पक्षे चाविद्यमानस्य धर्मस्य वादिनिर्दिष्टसाधनसाहचर्यमात्रेण साध्यधर्मस्येव दृष्टान्तात् पक्षे समुत्कर्षेण प्रत्यवस्थानमुत्कर्षसमः । अविशेषसमातो भेदप्रदर्शनायोक्तं वादिसाधनशक्तित इति । तत्र हि सत्त्वादिना हेत्वन्तरेणोत्कर्षं दूषयति । सद्भावोपपत्तेरिति । उदाहरणं तु अनित्यः शब्दः कृतकत्वाद् घटवदिति प्रयोगे अनित्यत्वेनेव मूर्तत्वेनापि सहचरितं कृतकत्वं घटादावुपलब्धं शब्दे ऽपि मूर्तत्वं साधयेत् । न चेदेवमनित्यत्वमपि न साधयेदविशेषात् । तथा क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदिति प्रयोगे कार्यं कर्तृमत्त्वेनेव किंचिज्ज्ञशरीरिकर्तृमत्वेनापि सहचरितं घटादावुपलब्धमिति क्षित्यादावपि तथाविधमेव कर्तारं साधयेदभिमतसर्वज्ञाशरीरिकर्तृत्वं विरुणद्धीति विशेषवि-

दिहेतोर्गुणकर्मादौ नित्यत्वव्यभिचारेण तस्मात् तत्सिद्धिरित्यर्थः ॥ ४ ॥

वादिसाधनशक्तितः वाद्युक्तहेतुबलात् उदाहरणान्तरापदेशव्याजेनेश्वरानुमानं प्रति मीमांसकादीनाम् ।

एवंरूपवचनमेतज्जात्युत्तरमित्याह । क्षित्यादिकमि-

रुद्धो हेतुरिति । कः पुनरस्योत्थानहेतुः पक्षे ऽविद्यमानस्य दृष्टान्ते वादिहेतुसहचरितस्य धर्मस्योपलम्भः विशेषविरुद्धत्वमारोप्यं तद्भ्रान्तिः फलम् साधारणदुष्टत्वमूलं तु नेदं स्वसाध्यसाधकं विरुद्धत्वान्नित्यत्वसाधनकृतकत्ववदिति । प्रतिषेधहेतोरपि विशेषविरुद्धत्वं नित्यत्वसाधनकृतकत्वे नित्यत्वासाधकत्वं दृष्टमिति साधकत्वमिव नित्यत्वासाधकत्वमपि साधयेदित्यभिमतमनित्यत्वासाधकत्वं विरुणद्धीति । असाधारणं तु युक्ताङ्गहीनत्वं कार्यत्वादेः कर्तृमत्त्वादिनेव

---

ति । अभिमतं न्यायवाद्यभिमतम् । विरुणद्धीति । तेनाव्याप्तत्वात् तं प्रतिक्षिपति । सर्वत्र तज्जातिविशेषो लक्ष्यः तत्तद्विशेषसूत्रोक्तं लक्षणं प्रमादः प्रतिभाहानिर्वावसर इत्येतत्त्रयमुक्तप्रायमिति । तस्याङ्गान्तराण्याह । पक्षे ऽविद्यमानस्येत्यादिना । तद्भ्रान्तिः फलं विशेषविरोधः आयातं ततोऽङ्गं पराजित इति वादि भ्रमो जातिवादिनः फलमित्यर्थः । साधारणदुष्टत्वमूलं स्वव्याघातकत्वं नेदं स्वसाध्यसाधकमिति वादिसाधनसाहचर्यमात्रेण दिष्टं तत्पक्षोनिष्टधर्मप्रसञ्जनं ह्युत्कर्षसमः स जात्युत्तरेऽप्यस्ति कथं नित्यत्वसाधककृतकत्वरूपे दृष्टान्तविरुद्धत्वानित्यत्वसाधकमस्ति तदसाधकत्वं जातिवादिनो विरुद्धत्वात् इति हेतोः पक्षभूते वादिसाधने व्यापनं ततश्च नित्यत्वासाधकत्वं जातिवाद्यभिहितमनित्यत्वादिति हेतोः कर्तृमत्त्वानित्यत्वादिनेव किञ्चित् शरीरिकर्तृमत्त्वमूर्तत्वादिना

शरीरादिनापि व्याप्त्यभावात् सत्यां तु व्याप्ताविष्टापादनादिति ॥ ५ ॥

> व्यावृत्ते व्यापकाभासे
> पक्षतो लिङ्गसाध्ययोः ।
> आकर्षोऽन्यतरस्य स्या-
> दपकर्षसमः स्फुटः ॥ ६ ॥

दृष्टान्ते साध्यस्य हेतोर्वा व्यापकत्वेन कञ्चिद्धर्ममारोप्य पक्षे तन्निवृत्ते व्यापकाभावाद्व्याप्याभाव इति साध्यस्य हेतोर्वा पक्षादपकर्षणमपकर्षसमः यथा पूर्वयोरेव प्रयोगयोर्दृष्टान्ते घटे कृतकत्वस्य वा अनित्यत्वस्य वा व्यापकं मूर्तत्वं तच्च शब्दाद्व्यावृत्तमिति तयोरन्यतरस्य निवृत्तिः घटादौ कर्तृमत्त्वस्य कार्यत्वस्य वा व्यापकं शरीरित्वम् तच्च क्षित्यादेर्निवृत्तमिति तयोरन्यतरस्य वा निवृत्तिरिति । उत्थानहे-

---

व्याप्तिर्नास्ति कार्यस्य शरीरस्य कर्तृकत्वाभावात् कृतकस्य कर्मणो मूर्तत्वाभावाच्च ॥ ५ ॥

अथ तेषामपि शरीरकर्तृकत्वमूर्तत्वसद्भावे जातिवाक्यस्य सिद्धसाधकत्वात् युक्ताङ्गहानिरित्यर्थः । अपकर्षणमपकर्षेण प्रत्यवस्थानं प्रथमं शब्दनित्यत्वानुमाने अपकर्षसमं दर्शयति । घटादौ कर्तृमत्त्वस्येति । साध्यपक्ष इति प्रबलप्रमाणबुद्ध्या साध्यापकर्षाभिधाने बाधितविषयत्वं प्रतिप्रमाणबुद्ध्या चेत् सत्प्रतिपक्षत्वमिति विभागः हेत्वपकर्ष इति विभागः हेत्वपकर्ष इति यया कयाचिद्बुद्ध्या हेत्वपकर्षे सिद्धत्वमारोप्य उत्कर्षसमवदिति । नेदं स्वसा-

**सपक्षवर्तिनो हेतोर्यादृग्रूपं विवक्षितम्[1] ॥ ८ ॥**
**पक्षोपि तादृग्घेतुः स्यादन्यथा हेत्वसिद्धता[2] ।**
**सपक्षवत् तदा साध्य इत्यवर्ण्यसमाकृतिः ॥ ९ ॥**

किं सपक्षवत्पक्षोपि सिद्धार्थहेतुमान्न वा । न चेत् पक्षोपि न साध्यः स्यात् सपक्षवर्तिनः सिद्धार्थस्य हेतोस्तत्राभावात् तथा च स्वरूपासिद्धो हेतुः । सिद्धार्थधर्मवर्तित्वे तु सिद्धधर्मविशिष्टत्वात् पक्षो न साध्यः स्यात् तथा चापक्षधर्मो हेतुरिति प्रत्यवस्थानमवर्ण्यसमः । एवं रूपान्तरेष्वपि दर्शयितव्यम् उत्थानहेतुस्तु पक्षधर्मत्वापेक्षितरूपवद्धेतुमत्वे ऽपि पक्षस्य पक्षाविवक्षितसपक्षमात्रविवक्षितरूपवद्धेतुमत्त्वेनासिद्धिः साधारणमसाधारणं दुष्टत्वमूलं वर्ण्यसमावद् द्रष्टव्यम् ॥ ८ ॥ ९ ॥

---

सपक्षवर्तिन्यपि हेतोरिति शेषः । पक्षो न साध्यः स्यात् साध्येन गृहीतव्याप्तिहेतुः पक्षे न चेत् न तत्र साध्यसाधनसिद्धिरित्यर्थः । अपक्षधर्मः आश्रयासिद्धः एवं रूपान्तरेष्वपीति । अनारब्धसाध्यज्ञापनशक्तित्वादिरूपचतुष्टयवद्धेतुसद्भावासद्भावौ पक्षो न साध्यः स्यादिति द्रष्टव्यमित्यर्थः । साधारणमसाधारणं चेति । प्रतिषेधहेतोरप्यवर्ण्यस्वरूपस्य व्याघातकत्वमविषयवृत्तित्वमयुक्ताङ्गाधिकत्वं च पूर्ववद्ज्ञातव्यमित्यर्थः ॥ ८ ॥ ९ ॥

---

(१) व्यवस्थितम्—पा· A पु·
(२) अन्यथासिद्धहेतुता—पा· B पु· ।

कानि पुनः पक्षमात्रवर्तिनो हेतोर्विवक्षितानि रूपाणि कानि चासपक्षमात्रवर्तिन इत्यत्राह ॥

**असिद्धार्थत्वमारब्धसाध्यज्ञापनशक्तता ।**
**व्याप्तिप्रमाणशून्यत्वं संशयैकार्थता तथा ॥१०॥**
**स्वरूपभेदश्चेत्येतत् पक्षमात्रं विवक्षितम् ।**
**हेतुरूपं सपक्षे तु तादृग्रूपविपर्ययः ॥ ११ ॥**

हेतोरर्थः प्रमेयं सिषाधयिषितो धर्म इति यावत् । स हि पक्षे ऽसिद्धो भवति । अन्यथा सिद्धसाध्यताप्रसङ्गात् सपक्षे तु सिद्धः इतरथा साध्यवैकल्यप्रसङ्गात् पक्षे साध्यज्ञापनाय प्रवृत्तशक्तिर्हेतोरन्यत्र न तथा पूर्वमेव प्रमाणान्तरेण साध्यसिद्धिः पक्षे संशयसमानविषयो हेतुः सन्दिग्धन्यायप्रवृत्तेः इतरत्र तथा साध्यधर्मनिश्चयात् पक्षे व्याप्तिग्राहकशून्यो हेतुः । तत्र साध्यस्य प्रमाणान्तराभावात् अपरत्र प्रमाणान्तरात् साध्यहेतोर्व्याप्तिर्गृह्यते । पक्षे धूमादिविशेषः कश्चित् परत्र तज्जातीयोऽन्यो विशेष इत्येतानि हेतुरूपाणि पक्षसपक्षयोर्व्यवस्थया विवक्षितानि ॥ १० ॥ ११ ॥

**धर्मस्यैकस्य केनापि धर्मेण व्यभिचारतः ।**
**हेतोश्च व्यभिचारोक्तेः विकल्पसमजातिता ॥१२॥**

---

पक्षे ऽसिद्धो भवति प्रतिवादिन इति शेषः । तत्र साध्यस्येति । प्रस्तुतानुमानेनैव हि पक्षे साध्यासाद्दः न प्रमाणान्तरेण तत्साध्यसाधनयोर्व्याप्तिः पक्षेण प्रमाणान्तरसिद्धिरित्यर्थः ॥ १० ॥ ११ ॥

**सपक्षवर्तिनो हेतोर्याद्दग्रूपं विवक्षितम्[(१)] ॥ ८ ॥**
**पक्षोपि तादृग्घेतुः स्यादन्यथा हेत्वसिद्धता[(२)] ।**
**सपक्षवत् तदा साध्य इत्यवर्ण्यसमाकृतिः ॥ ९ ॥**

किं सपक्षवत्पक्षोपि सिद्धार्थहेतुमान्न वा । न चेत् पक्षोपि न साध्यः स्यात् सपक्षवर्तिनः सिद्धार्थस्य हेतोस्तत्राभावात् तथा च स्वरूपासिद्धो हेतुः । सिद्धार्थधर्मवर्तित्वे तु सिद्धधर्मविशिष्टत्वात् पक्षो न साध्यः स्यात् तथा चापक्षधर्मा हेतुरिति प्रत्यवस्थानमवर्ण्यसमः । एवं रूपान्तरेष्वपि दर्शयितव्यम् उत्थानहेतुस्तु पक्षधर्मत्वापेक्षितरूपवद्धेतुमत्वे ऽपि पक्षस्य पक्षाविवक्षितसपक्षमात्रविवक्षितरूपवद्धेतुमत्त्वेनासिद्धिः साधारणमसाधारणं दुष्टत्वमूलं वर्ण्यसमावद् द्रष्टव्यम् ॥ ८ ॥ ९ ॥

---

सपक्षवर्तिन्यपि हेतोरिति शेषः । पक्षो न साध्यः स्यात् साध्येन गृहीतव्याप्तिहेतुः पक्षे न चेत् न तत्र साध्यसाधनसिद्धिरित्यर्थः । अपक्षधर्मः आश्रयासिद्धः एवं रूपान्तरेष्वपीति । अनारब्धसाध्यज्ञापनशक्तित्वादिरूपचतुष्पद्धेतुसद्भावासद्भावौ पक्षो न साध्यः स्यादिति द्रष्टव्यमित्यर्थः । साधारणमसाधारणं चेति । प्रतिषेधहेतोरप्यवर्ण्यस्वरूपस्य व्याघातकत्वमतिप्रवृत्तित्वमयुक्ताङ्गाधिकत्वं च पूर्ववद्ज्ञातव्यमित्यर्थः ॥ ८ ॥ ९ ॥

---

(१) व्यवस्थितम्–पा· A पु·

(२) अन्यथासिद्धिहेतुता–पा· B पु· ।

कानि पुनः पक्षमात्रवर्तिनो हेतोर्विवक्षितानि रूपाणि कानि चासपक्षमात्रवर्तिन इत्यत्राह ॥

अप्रसिद्धार्थत्वमारब्धसाध्यज्ञापनशक्तता ।
व्याप्तिप्रामाणशून्यत्वं संशयैकार्थता तथा ॥१०॥
स्वरूपभेदश्चेत्येतत् पक्षमात्रं विवक्षितम् ।
हेतुरूपं सपक्षे तु तद्रूपविपर्ययः ॥ ११ ॥

हेतोरयं प्रमेयं सिषाधयिषितो धर्म इति यावत् । स हि पक्षे ऽसिद्धो भवति । अन्यथा सिद्धसाध्यताप्रसङ्गात् सपक्षे तु सिद्धः इतरथा साध्यवैकल्यप्रसङ्गात् पक्षे साध्यज्ञापनाय प्रवृत्तशक्तिर्हेतोरन्यत्र न तथा पूर्वमेव प्रमाणान्तरेण साध्यसिद्धिः पक्षे संशयसमानविषयो हेतुः सन्दिग्धन्यायप्रवृत्तेः इतरत्र तथा साध्यधर्मनिश्चयात् पक्षे व्याप्तिग्राहकशून्यो हेतुः । तत्र साध्यस्य प्रमाणान्तराभावात् अपरत्र प्रमाणान्तरात् साध्यहेतोर्व्याप्तिर्गृह्यते । पक्षे धूमादिविशेषः कश्चित् परत्र तज्जातीयोऽन्यो विशेष इत्येतानि हेतुरूपाणि पक्षसपक्षयोर्व्यवस्थया विवक्षितानि ॥ १० ॥ ११ ॥

धर्मस्यैकस्य केनापि धर्मेण व्यभिचारतः ।
हेतोश्च व्यभिचारोक्तेः विकल्पसमजातिता ॥१२॥

---

पक्षे ऽसिद्धो भवति प्रतिवादिन इति शेषः । तत्र साध्यस्येति । प्रस्तुतानुमानेनैव हि पक्षे साध्यासाद्धः न प्रमाणान्तरेण ततःसाध्यसाधनयोर्व्याप्तिः पक्षेण प्रमाणान्तरसिद्धिरित्यर्थः ॥ १० ॥ ११ ॥

अत्र षष्ठ्यन्तो धर्मशब्दो हेतुधर्मान्तरं चाह। तृतीयान्तस्तु साध्यधर्मं धर्मान्तरं च । ततश्चैकस्य हेतुधर्मस्य धर्मान्तरेण वा धर्मान्तरस्य साध्यधर्मेण वा धर्मान्तरस्य धर्मान्तरेण वा व्यभिचारदर्शनमुत्थानहेतुः। तेन हेतोरपि साध्यव्यभिचारापादनं विकल्पसमः। तच्च दृष्टान्ते साध्येन सह वर्ततां हेतुः पक्षे तु तेन विनैव वर्ततामिति व्यवस्थयैवापादनीयम्। तत्र हेतोर्धर्मान्तरं प्रति व्यभिचारस्त्रिविधः । पक्षदृष्टान्तयोः पक्षयोर्दृष्टान्तयोर्वेति । तत्र प्रथमो यथा। अनित्यः शब्दः कृतकत्वाद् घटवदिति प्रयोगे यथा कृतकत्वं शब्दे विभागजत्वेन सह वर्तते घटे विनैव वर्तत इति विभागजत्वं व्यभिचरति। तथा कृतकत्वं घटे अनित्यत्वेन सह वर्ततां शब्दे तु तेन विनैव वर्ततेत्यनित्यत्वं व्यभिचरेदिति । द्वितीयस्तु अनित्ये वाङ्मनसी कृतकत्वादिति प्रयोगे कृतकत्वं यथा वाङ्मनसयोर्मूर्तत्वममूर्तत्वं च व्यभिचरति तथा साध्यमपि व्यभिचरेदिति । तृतीयस्तु क्रियावाना-

इति व्यवस्थयैव शून्ये पक्षे वृत्तिरेव व्यभिचारः न तु विपक्षगामित्वमिति नियमः घटे ऽपि नैव वर्तते शब्दविभागयोरेव विभागजत्वं अतस्तद्व्यतिरिक्ते घटे विभागजत्वमन्तरेण कृतकत्वं वर्तत इत्यर्थः।मूर्तत्वममूर्तत्वं चेति। यथा कृतकत्वं मनसि मूर्तत्वेन सह वर्तते।यथाह वान्यमूर्तत्वेन(?)

त्मा क्रियाहेतुगुणयोगित्वात् लोष्टवत् तूलवदित्यत्र क्रियाहेतुगुणयोगित्वं हेतुः यथा क्रियावतो लोष्टतूलयोर्वस्तु लघुत्वे व्यभिचरति तथा क्रियावत्त्वमपीति। धर्मान्तरस्य साध्यधर्मं प्रति व्यभिचारो यथा अनित्यः शब्दः कृतकत्वादिति प्रयोगे यथा प्रमेयत्वमाकाशघटयोरनित्यत्वं व्यभिचरति तथा कृतकत्वमपीति। धर्मान्तरस्य धर्मान्तरं प्रति व्यभिचारो यथा द्रव्यत्वस्य पयःपावकयोरुष्णत्वव्यभिचारात् कृतकत्वस्याप्यनित्यत्वाव्यभिचार इति । अनैकान्तिकाभासोयं दुष्टत्वमूलं तु अव्याप्तस्य व्यभिचारान्न व्याप्तस्यापि व्यभिचारः। तथाभ्युपगमे वा प्रतिषेधहेतोरप्यन्यव्यभिचाराद्व्यभिचारः स्यादिति व्याघातः । अविषयवृत्तित्वं चान्यव्यभिचारादन्यस्यासाधकत्वापादनादिति ॥ १२ ॥

---

सह वर्तते मनसि वर्तत एवमित्यर्थः । आत्मनि क्रियाहेतुगुणः प्रयत्नः प्राणादिव्यापारहेतुत्वात् लोष्टे वेगः गुरुलघुत्वविशेषतदभावौ अनैकान्तिकचोदनाभासोयं पक्षे साध्यं विनैव वृत्तिर्नाम पक्षविपक्षयोर्वृत्तिः भवत्यतः पक्षत्रयवृत्तित्वादनैकान्तिकचोदनाभासोयं सत्यपक्षवृत्तित्वादाश्रयासिद्ध इत्यर्थः । अव्याप्तस्येपृसाध्यव्यभिचारिणो विभागजत्वादेः प्रतिषेधहेतोरपीति धर्मान्तरादिकं प्रति व्यभिचाराज्जातिवादिहेतोरप्यसाधकत्वरूपसाध्यव्यभिचारः स्यादित्यर्थः ॥ १२ ॥

**दृष्टान्तहेतुपक्षाणां सिद्धानामपि साध्यवत् ।**
**साध्यतापादनं तस्माल्लिङ्गात् साध्यसमो भवेत्॥१३**

प्रमाणान्तरसिद्धानामेव पक्षहेतुदृष्टान्तानां साध्यधर्मस्येव तत एव लिङ्गात् साध्यत्वापादानं साध्यसमः। तस्मादिति वर्ण्यसमतो भेदं दर्शयति । एवं प्रत्यवतिष्ठमानस्यायमभिमानः । दृष्टान्ते हि प्रयोजकत्वं हेतोर्गृह्यते तच्च साध्यं प्रत्येव प्रयोजकत्वं नान्यत्रेति । तत्रापि साध्यसिद्ध्यर्थमयमेव हेतुः प्रयोक्तव्यः । इतरथा पक्षे ऽपि साध्याप्रयोजकत्वं स्यात् । एवं लिङ्गधर्मिणावपि सिद्धावनुमानाङ्गं भवतः तत्सिद्धिश्च न प्रमाणान्तरादुचिता लिङ्गस्य तत्राप्रयोजकत्वेन साध्ये ऽप्यप्रयोजकत्वापत्तेः। क्रोडीकृतलिङ्गधर्मिलिङ्गिविषयानुमितिज्ञानजनकत्वाल्लिङ्गस्य न हि लिङ्गधर्मिणावपोह्य साध्यमात्रप्रतीतिर्लिङ्गाज्जायते । अय-

---

साध्यस्य साधकं साधनमिति प्रसिद्धिं विहाय पक्षादीनामप्यनेनैव साधनेन साध्यत्वं वदतः कोऽभिप्राय इत्याशङ्क्याह । एवं प्रत्यवतिष्ठमानस्येति । प्रयोजकत्वं साधकत्वम् इतरथा सपक्षे ऽप्यनेनैव साधनेन साध्यसिद्ध्यनङ्गीकारे कथमेवमित्यत्राह । क्रोडीकृतेति । धर्मिलिङ्गसहितसाध्यधर्मस्यानुमेयत्वादित्यर्थः । अयमेव न्याय इति दृष्टान्तगतसाध्यस्यापि अयमेव हेतुः साधक इति स्थिते तत्रापि धर्मिहेतुसहितस्य साध्यत्वात् तयोरप्ययमेव साधक इत्यवगन्तव्यमित्यर्थः। असिद्धत्वादय इत्यादिश-

---

(१) सपहेतु-पा॰ B पु॰ ।

मेव न्यायो दृष्टान्तधर्मिणि तद्वर्त्तिनि च हेतौ दर्शयितव्यः । ततश्च पक्षहेतुदृष्टान्तानामपि सिद्ध्यर्थमयमेव हेतुर्यावन्न प्रयुज्यते तावत् तेषामसिद्धिर्भवेदिति । साध्यविकलत्वासिद्धत्वादय आरोप्यन्त इत्यस्य प्रतिषेधहेतावपि दुर्वारत्वात् स्वव्याघातः । अयुक्ताङ्गस्वीकारश्च पक्षादीनां तत एव लिङ्गात् सिद्धेरयुक्ताया एवाभ्युपगमात् उत्कर्षसमादीनां षण्णां लक्षणसूत्रम् साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः । अत्रोत्कर्षादिसमाख्यानिर्वचनमेवासां लक्षणम् । साध्यदृष्टान्तयोर्धर्मविकल्पः पञ्चानां कारणम् साध्यः पक्षः धर्माणां विकल्पो नानात्वं वैचित्र्यं तच्च तत्रतत्र दर्शितमेव ।

---

न्देनान्यथासिद्धत्वं साधनविकलदृष्टान्ताश्रयासिद्धत्वं च गृह्यते । हेतुदोषस्याश्रयासिद्धिः स्वरूपासिद्धिः विरुद्धत्वमसाधारणत्वं व्याप्त्यसिद्धिश्च तत्तचोदनाभासोऽयं तत्तद्भ्रान्तिः फलमिति च द्रष्टव्यम् । अस्य यथोक्तसाध्यत्वस्य । अत्रोत्कर्षादीति । पक्षदृष्टान्तयोर्धर्मविकल्पाद्युत्थानबीजभेदादुत्कर्षेण प्रत्यवस्थानं अपकर्षेण प्रत्यवस्थानमित्यादिकमासां जातीनां लक्षणमित्यर्थः । वैचित्र्यं सदसत्त्वं वैलक्षण्यं च । तत्रतत्रेति । उत्कर्षसमे साधनसहचरितमात्रस्य धर्मान्तरस्य पक्षदृष्टान्तयोः सदसत्त्वं धर्मविकल्पः अपकर्षसमे साध्यसाधनयोः व्यापकाभिमतस्य धर्मान्तरस्य दृष्टान्तपक्षयोः सदसत्त्वम् वर्ण्यसमे हेतोः पक्षस्थि-

विकल्पसमायां तु साध्यदृष्टान्तयोरिति पदं साध्ययो-र्दृष्टान्तयोः साध्यदृष्टान्तयोरिति प्रत्येकसमुदायोप-लक्षणपरं योजनीयम् । उभयसाध्यत्वाच्चेति षष्ठस्य हेतुः । चकारः पूर्वोक्तं धर्मविकल्पं समुच्चिनोति । अनुमाने सिद्धभागः साध्यभागश्चोभयं नाम तयोः सिद्धसाध्यत्वं धर्मविकल्पः । तत्र साध्यभागस्येव सिद्ध-भागस्यापि साध्यत्वमुभयसाध्यत्वं ततश्च सिद्धभाग-साधनार्थमनुमानप्रयोगप्रसञ्जनं साध्यसम इत्यर्थः । आसामुद्धारसूत्रम् किञ्चित् साधर्म्यादुपसंहारसिद्धे र्वै-धर्म्यादप्रतिषेधः । किञ्चित् साधर्म्याद् व्याप्तात् साध्यो-पसंहारे सिद्धे वैधर्म्यादव्याप्तात् कुतश्चिद्धर्मात् प्रति-षेधो न भवतीत्यर्थः । वर्ण्यावर्ण्यसाध्यसमानां स्वव्या-घातत्वप्रदर्शनार्थं सूत्रम् साध्यातिदेशाच्च दृष्टान्तोप-पत्तेरिति । यतः साध्यधर्मोऽन्यत्रातिदिश्यते स दृष्टा-

---

तद्रूपाणां पक्षसपक्षयोः सदसत्त्वम् विकल्पसमे साध्यसा-धनधर्मान्तराणां पक्षदृष्टान्तयोः दृष्टान्तयोश्च नानात्वम् साध्यसमे ऽनुमानस्य सिद्धसाध्यभागयोर्धर्मिहेतुसाध्यध-र्माणां सिद्धत्वसाध्यत्वरूपवैलक्षण्यं धर्मविकल्पः साध्य-भागस्येव सिद्धभागस्याप्यनेनैव साध्यत्वापादनादुभय-साध्यत्वमिति तत्र दर्शितमित्यर्थः । व्याप्तात् वायुक्तात् कृतकत्वादिति हेतोः । अव्याप्तात् जातिवायुक्तात् युक्ता-द्रहीनत्वादियुक्तादिरुद्धादिहेतोः । यतः यस्मात् दृष्टा-न्तादन्यत्र साध्यधर्मिणि अतिदिश्यते यथा घटः तथा शब्दोऽपीति प्रतिपाद्यते उभयोरपि सिद्धत्वादित्यवर्ण्य-

न्तः । सिद्धेन चातिदेशो भवत्यसिद्धस्येति न्यायात् सिद्धो दृष्टान्तः । पक्षस्तु साध्योऽङ्गीकार्यः उभयोरपि सिद्धत्वे साध्यत्वे वा दृष्टान्तदार्ष्टान्तिकभावव्याघात इति ॥ १३ ॥

**प्राप्य साध्यं साधयति हेतुश्चेत् प्राप्तिकर्मणः ।**
**साध्यस्य पूर्वं सिद्धिः स्यादिति प्राप्तिसमोदयः ॥ १४ ॥**

कृतिज्ञप्तिसाधारणीयं जातिः ततश्च साध्यं कार्यं ज्ञाप्यं च । तत्र कार्यमनुमितिज्ञानं ज्ञाप्यमनुमेयम् हेतुश्च लिङ्गं तज्ज्ञानं वा । प्राप्तिः संयोगादिर्विषयविषयिभावश्च सिद्धिः सत्त्वं ज्ञातत्वं च

समयोरुत्तरम् । साध्यत्वे वेति । वर्ण्यसाध्ययोरुत्तरमिति विभागः ॥ १३ ॥

प्राप्तिकर्मणः प्राप्त्याख्यसम्बन्धप्रतिसम्बन्धिनः ।

कृतिज्ञप्तीति । अनुमितिज्ञानस्योत्पत्तिपक्षे अनुमेयप्रतिपक्षे चेयं जातिः प्रवर्तत इत्यर्थः । ततश्चेति । सिद्धिशब्दस्य कृतिज्ञप्तिवाचकत्वात् साध्यशब्दस्यानुमितिज्ञानानुमेयं च वाच्यमित्यर्थः । हेतुश्चेति । व्याप्तत्वेन परामृष्टं लिङ्गपरामर्शो वा हेतुरिति पूर्वमेवोक्तमित्यर्थः । प्राप्तिः संयोगादिरिति । यदा लिङ्गं हेतुस्तदा साध्येन यथायोगं संयोगसमवायादिः सम्बन्धः यदा लिङ्गज्ञानं हेतुस्तदा-विषयविषयीभाव इत्यर्थः । सिद्धिः सत्त्वमिति । कृतिपक्षे सिद्धिरुत्पत्तिः ज्ञप्तिपक्षे ज्ञातत्वमित्यर्थः । आहत्यपदेन किमुक्तं भवतीत्यत्राह(?) । एतदुक्तं भवतीति । तेना-

एतदुक्तं भवति लिङ्गं तज्ज्ञानं वा स्वकार्यमनुमितिज्ञानं प्राप्य साधयेदप्राप्य वा अप्राप्य चेत् सर्वस्यापि सर्वं साधनं भवेदविशेषात् तेन प्राप्येति वक्तव्यम् सतां च प्राप्तिः सम्भवति सम्बन्धस्योभयनिष्ठत्वेनान्यतरस्याप्यसत्त्वे निराश्रयत्वप्रसङ्गात् । तथा च कार्यस्याप्यवश्याङ्गीकर्तव्ये सत्त्वे कार्यकारणयोरुभयोरपि सत्त्वेनाविशेषात् किं कस्य कारणं कार्यं वेति निष्फलमनुमानमिति कृतिपक्षे प्राप्तिसमायाः प्रवृत्तिः ज्ञप्तिपक्षे ऽप्यप्राप्य ज्ञापनेऽतिप्रसङ्गात् प्राप्येति वक्तव्यं लिङ्गज्ञानस्य लिङ्गिना संयोगादिप्राप्त्यसम्भवात् विषयविषयिभाव एवाङ्गीकार्यः । तत्र च लिङ्गज्ञाने लिङ्गवल्लिङ्गिनोऽपि स्फुरणात् ज्ञातत्वेनाविशेषात् किं कस्य ज्ञापकं ज्ञाप्यं चेति। ततश्च प्राप्त्यविशेषेण साधनत्वप्रतिक्षेपो लक्षणम्। अप्राप्त्यवतिप्रसङ्गादसाधनत्वमुत्थानहेतुः । साध्यस्य पूर्वं सिद्धिर्हेतोर्विशेषणं तच्चात्र नास्तीति विशेष-

---

प्राप्येति पक्षे दोषदर्शनेन । तथा च प्राप्तिप्रतिबन्धिनश्च निष्फलमनुमानम् अनुमितिज्ञानजननं ह्यनुमानप्रयोजनं तच्चेत् पूर्वमेव स्यादनुमानप्रयोगो व्यर्थः स्यादित्यर्थः । अतिप्रसङ्गाद्धेतोरविशेषज्ञापकत्वे प्रसङ्गात् लिङ्गज्ञानस्य लिङ्गपरामर्शाख्यस्य हेतोर्लिङ्गिना साध्येन संयोगादिगुणस्य संभे- ज्ञानस्याश्रयव्यतिरिक्तेन संयोगसमवायाद्यसम्भवादित्यर्थः। तच्चात्र नास्तीति। हेतुसिद्धिसमये साध्यस्यापि सिद्धत्वात् उक्तमत्र अप्राप्तिसमायां प्राप्य साधयतीत्य-

णासिद्धिरारोप्या । दुष्टत्वमूलमुत्तरत्र प्रदर्शयिष्याम इति ॥ १४ ॥

**अप्राप्य साधयन् साध्यं हेतुः सर्वं च साधयेत् ।**
**अप्राप्तेरविशिष्टत्वादित्यप्राप्तिसमस्थितिः ॥१५॥**

प्राप्तावविशेषेणासाधनत्वात् अप्राप्य कारणं ज्ञापनं च वक्तव्यम् । तच्चायुक्तमतिप्रसङ्गात् । न हि दाह्यमप्राप्तो दहनो दहति प्रकाश्यमप्राप्य प्रदीपः प्रकाशयतीति च दृष्टमिष्टं चेत्येवमप्राप्तावतिप्रसङ्गादसाधनत्वेन प्रत्यवस्थानमप्राप्तिसम इति लक्षणम् । प्राप्तावविशेषादसाधनत्वमुत्थानहेतुः । साध्यप्राप्तिर्हेतोर्विशेषणं तच्चात्र नास्तीति पूर्ववद्विशेषणासिद्धिरारोप्येति । अनयोर्लक्षणसूत्रम् प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्यविशिष्टत्वादप्राप्यासाधकत्वाच्च प्राप्त्यप्राप्तिसमाविति । हेतोः साधकत्वमिति शेषः । विकल्पेनोत्थानहेतुं दर्शयति । कार्यकारणभावापलापवादिनो ह्येवमाहुः ॥

---

अपि साध्यहेतुव्याप्त्या शब्दानामित्यर्थः ॥ १४ ॥

पूर्ववदियमपि कृतिज्ञप्तिसाधारणीति दर्शयति । अप्राप्य करणं ज्ञापनं चेति । अतिप्रसङ्गात् अप्राप्त्यविशेषात् सर्वस्य करणे ज्ञापने च प्रसङ्गादित्यर्थः । न हि दृष्टमिष्टं चेति सम्बन्धविकल्पेनेति सूत्रे प्राप्य साध्यमप्राप्य वा हेतोरित्यन्तं न लक्षणोपयुक्तमिति भावः । एवंविधं जात्युत्तरं न कश्चिद्वदत्यस्यानोपालम्भोऽयमित्याशङ्क्याह । कार्यकारणभावेति । अपलापवादिनः बौद्धचार्वाकादयः ।

असत्त्वान्नास्ति सम्बन्धः कारणैः सत्त्वसङ्गिभिः ।
असम्बन्धस्य चोत्पत्तिमिच्छतो न व्यवस्थितिः ॥ इति ।

स्वव्याघातकत्वमनयोः सुगममेव प्रतिषेधकहेतावपि दूष्यं प्राप्य वा अप्राप्य वेत्यादिप्रसङ्गस्य दुर्वारत्वात् । असाधारणं तु प्राप्तिसमाया अयुक्ताङ्गाधिकत्वं कृतिपक्षे साध्यप्राप्तेरयुक्ताया एव स्वीकारात् । अयुक्तिश्चाप्राप्तेरेव दण्डादिभिर्घटादिनिष्पत्तिदर्शनात् । ज्ञप्तिपक्षे तु लिङ्गस्य तावल्लिङ्गिना प्रतिबन्धलक्षणा प्राप्तिरस्ति । लिङ्गज्ञानस्यापि तद्व्याप्तविषयिलक्षणा लिङ्गिना प्राप्तिरस्त्येव । साक्षाद्विषयविषयिलक्षणा नास्तीति चेत् । तर्ह्ययुक्ताङ्गस्वीकारः लिङ्गज्ञानस्य साक्षात् साध्यधर्मविषयत्वस्यानङ्गत्वादिति । अप्राप्तिसमाप्येतेन निरस्तैवायुक्ताङ्गञ्च व्याप्तिलक्षणायाः प्राप्तेरनङ्गीकारात् । साक्षात् सम्बन्धोऽङ्गमिति

---

नास्ति सम्बन्धः कार्यस्येति शेषः । कारणैर्मृद्दण्डचक्रादिभिः कारणैः सत्त्वसङ्गिभिः सत्पदार्थसम्बन्धवद्भिश्च स्वयंसिद्धेर्वा न व्यवस्थितिः एकस्मात् सर्वस्योत्पत्तिप्रसङ्ग इत्यर्थः ।

प्रतिषेधहेतोरपि नेदं स्वसाध्यसाधकं विशेषणासिद्धत्वादित्यत्रापि ज्ञप्तिपक्षे ऽप्ययुक्ताङ्गाधिक्यं प्रतिपादयितुमाह । ज्ञप्तिपक्षे त्विति । प्रतिबन्धलक्षणा व्याप्तिरूपा । लिङ्गज्ञानस्यापीति । लिङ्गपरामर्शो हेतोः साध्यव्याप्तलिङ्गविषयत्वरूपः साध्येन सम्बन्धोऽस्तीत्यर्थः । साक्षाद्विषयेति । हेतुसाध्ययोरव्यवहितसम्बन्धाभावे ज्ञाप्यज्ञापकभावो न युक्त इति चेदित्यर्थः । एतेन प्राप्तिसमोक्तदोषा-

चेत् तर्ह्यनङ्गाङ्गीकारः । अभिचारकर्मणा भ्रातृव्यमारणादौ साध्यमाने दृष्टमेतत् । यत् साक्षादप्राप्तमपि साधनं भवतीति तदेतत् सर्वमभिसन्धायोक्तं घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेध इति । केचित्तु साधनविशेषः साध्यविशेषेण व्याप्तो न वा । न चेत् न तं गमयेदतिप्रसङ्गात् व्याप्तश्चेद्व्याप्तिग्रहणसमय एव लिङ्गिविशेषस्यापि ज्ञातत्वादनर्थकमनुमानमिति प्रत्यवस्थानं प्राप्तिसमः । अप्राप्तिसमस्तु लिङ्गपरामर्शस्य करणत्वात् । करणानां च कर्मप्रत्यासत्त्यवश्यम्भावात् साध्यविशेषप्राप्तिर्वक्तव्या । सा चात्र नास्तीति प्रत्यवस्थानमिति लक्षयन्ति । अनयोरप्युक्तलक्षणकक्षीकारात् तदवान्तरविशेषत्वमङ्गीचक्रुराचार्याः ॥ १५ ॥

## सिद्धे दृष्टान्तहेत्वादौ साधनप्रश्नपूर्वकम्(१) ।

णामत्रापि सुवचत्वेन । दोषान्तरमाह । अयुक्ताङ्गश्चेति । मारणादौ मारणोच्चाटनविद्वेषणस्तम्भनादौ इति भित्ते सप्तमी । प्राप्य साध्यमिति सूत्रस्यार्थान्तरं वक्त्रन्तरव्याजेनाह । केचित्त्विति । साधनविशेषः पक्षवर्ती हेतुः साध्यविशेषेण सिषाधयिषितधर्मेण । कारणानां चेति । वास्यादिकरणानि दार्वादिकर्मणा सम्बद्धान्येव क्रियाजननद्वारा द्वैधीभावादिकं फलं जनयन्तीत्येवमेतदपीत्यर्थः । एतदपि व्याख्यानमस्मदभिमतमित्याह । अनयोरपीति । तदवान्तरविशेषत्वं प्राप्त्यप्राप्तिसमयोरपीति तदवान्तरविशेषत्वं प्राप्त्यप्राप्तिसमयोरवान्तरभेदत्वम् ॥ १५ ॥

(१) कारणप्रश्नपूर्वकम्–पा० A पु० ।

**अन्वस्थाभासवाद्यः प्रसङ्गसमजातिता ॥ १६ ॥**

इयमपि कृतिज्ञप्तिसाधारणी जातिः तथा च साधनमुत्पादकं ज्ञापकं वा सिद्धिश्च स्वरूपतो ज्ञानतश्च । दृष्टान्तस्य कारणानपदेशादिति सूत्रखण्डे दृष्टान्तपदं स्वरूपतो ज्ञानतश्च सिद्धिमात्रमुपलक्षयति। कारणं ज्ञापकं कारकं वा कृतौ तावत् । अनुमितिज्ञानहेतूनां पक्षहेतुदृष्टान्तानां सिद्धानामपि कारणान्तरं वाच्यम्। न हि ते नित्याः कार्यस्यापि सदातनत्वप्रसङ्गात् न च तस्मादुत्पद्यन्ते स्वात्मनिवृत्तिविरोधात् असतः कारणत्वानुपपत्तेः कार्यस्यापि स्वत एवोत्पत्तिप्रसङ्गाच्च एवं तत्कारणस्यापीत्यनवस्थेति।

---

दृष्टान्तहेत्वादावित्यादिशब्देन पक्षो गृह्यते ।

स्वरूपतः उत्पत्तितः। पक्षहेत्वोरेतज्जातिप्रवृत्तिः सूत्रकारस्याननुमतेत्याशङ्क्याह । दृष्टान्तस्येति । सिद्धानामपि पक्षहेतुदृष्टान्तानामनवस्थादुस्थतयोत्पादकज्ञापकानभिधानात् प्रत्यवस्थानं प्रसङ्गसम इति सूत्रार्थः। नित्या अनाद्यनन्ताः। कार्यस्यापीति। करणसामग्र्या अनादित्वे तथाविधस्य कार्यस्याप्यनादित्वप्रसङ्गादित्यर्थः। असतः कारणत्वे सति स्वोत्पत्तेः पूर्वमसतः पक्षादेः स्वहेतुत्वायोगादित्यर्थः। एवं तत्कारणस्यापीति। उक्तेन प्रकारेण पक्षादीनां कारणवत्त्वे सिद्धे तेषामपि कारणानां कारणान्तरं वाच्यमेवं तेषामपीत्यनवस्थाप्रसङ्ग इत्यर्थः। पूर्वत्र कृतिपक्षे उत्तरत्र

ऽग्नौ तु प्रमाणे ऽपि किं प्रमाणं दृष्टान्ते ऽपि को दृष्टान्त इति प्रमाणादिपरम्परानुयोगे नानवस्थेत्यनवस्थाभासप्रसञ्जनमिति लक्षणम् । पूर्वत्र कारणपरम्परापेक्षामुखेनासत्त्वारोपः कारणम् उत्तरत्रानिश्चितस्यानिश्चायकत्वाध्यारोपः अनवस्थालक्षणप्रतिकूलतर्कपराहतिरारोप्या हेतुदोषपर्यन्तचिन्तायां पूर्वत्र पक्षादेः स्वरूपासिद्धिरुत्तरत्राज्ञानासिद्धिः । अत्र साधारण्यो मूलदोषः सुगम एव । असाधारण्यां तु ज्ञप्तावयुक्ताङ्गाधिकत्वम् । ज्ञातस्यैव ज्ञापकत्वमयुक्तमेव रूपादिव्यवहारार्थं प्रदीप उपादीयमाने चक्षुरादिषु व्यवस्थादर्शनेनानवस्थाप्रसङ्गाभावात् । लिङ्गविशेषणत्वात् ज्ञातत्वमपि ज्ञातव्यं विशेषणान्तरवत् तच्च लिङ्गान्तरेणापि ज्ञातव्यम् तत्रापि तथेत्यनवस्थेति चेत् न साध्यविपर्ययसंसर्गव्यवच्छेदकानामेव लिङ्गविशेषणानामवश्यज्ञेयत्वं

---

ज्ञप्तिपक्षे । प्रतिकूलतर्कपराहतिरिति न कश्चिद्धेतुदोषोऽस्तीत्याशङ्क्याह । हेतुदोषेति । पक्षादेरिति पक्षहेतुदृष्टान्तानामनुत्पत्तौ हेतोराश्रयस्वरूपे व्याप्यत्वासिद्धय आरोप्यन्त इत्यर्थः । अज्ञानासिद्धिः अज्ञातस्य पक्षादेरज्ञापकत्वादाश्रयाज्ञानासिद्ध्यादिका आरोप्यन्त इत्यर्थः । सुगम एव नेदं स्वसाध्यसाधकं सिद्धत्वादिति प्रतिषेधहेतोरप्युत्पत्तिज्ञप्तिपक्षयोः पूर्वोक्तदोषः सुवचन इत्यर्थः । चक्षुरादिष्विति । अज्ञातस्यैव चक्षुरादेः ज्ञापकत्वाव्यभिचारादर्शनेनेत्यर्थः । विशेषणान्तरवत् सामान्यवत्त्वादिवत् । साध्यविपर्ययेति । हेतोर्व्यभिचारपरिहाराणामित्यर्थः ।

न तु लिङ्गसहकारिमात्रत्वेनोपयुक्तानामपि । तथा चाविषयवृत्तित्वं कृतौ तु न तावत्कारणापेक्षैव दोषः। तदपेक्षप्रदीपोपादाने ऽनवस्थाभावात् । असिद्धविषयानवस्थायां हि दोषः तस्य सिद्धविषयायामपि सञ्चारणादविषयवृत्तित्वम् । तदुक्तम् प्रदीपोपादाने प्रसङ्गनिवृत्तिवत् तद्विनिवृत्तिरिति । विपरीतप्रसञ्जिकेत्यपि काचित्प्रसङ्गसमास्तीति केचित् । यथा इह भूतले घटो नास्तीत्यप्राप्तौ घटो न प्रतिषेधमर्हति तेन घटप्राप्तिप्रसङ्ग इति । तदसत् प्राप्तिसमायामेवान्तर्भावादस्याः तत्र हि प्रतिषिध्यमपि ज्ञातव्यं तस्य ज्ञापकं चक्षुरादि करणं भूतलाद्यधिकरणं च अप्राप्य प्रतिषेधातिप्रसङ्गात् प्रतिषेध्यं प्राप्य प्रतिषेधतीति वक्तव्यम् । प्राप्तिनिवृत्तिलक्षणत्वात् प्रतिषेधस्य प्राप्तौ च सत्त्वेनाविशेषात् प्रतिषेधायोग इति ॥ १६ ॥

---

तथा चेति । ज्ञानानपेक्षेषु ज्ञेयत्वापादानादविषयवृत्तित्वमित्यर्थः । ज्ञापकस्य कारणसापेक्षस्य च प्रदीपस्योपादाने कारणपरम्परापेक्षारूपानवस्थाप्रसङ्गविनिवृत्तिवदित्यत्रापि तथाविधानवस्था दोषाय न भवतीति । प्रसङ्गसमायाः प्रकारान्तरमाशङ्क्य निराकरोति । विपरीतप्रसञ्जिकेति । प्राप्तिसमायामस्यान्तर्भावमुपपादयति । इहेति । इह भूतले घटो नास्तीत्यज्ञातस्येति वक्तव्यम् तज्ज्ञापकं चक्षुरादि करणं भूतलाद्यधिकरणं च अधिकरणस्य घटस्य ज्ञानयोगात् ताभ्यामप्राप्तस्य ज्ञेयत्वायोगात् प्राप्तत्वे भूतलेघटसद्भावप्रसङ्गात् प्रतिषेधाभाव इति प्राप्तिद्वारायामप्रसङ्ग इति तत्रान्तर्भाव इत्यर्थः ॥ १६ ॥

अनङ्गत्वधिया हेतोः प्रतिदृष्टान्तमात्रतः ।
प्रत्यवस्थानमाचख्युः प्रतिदृष्टान्तलक्षणम् ॥ १७ ॥

हेतुरनङ्गं साध्यातिदेशो दृष्टान्त एवाङ्गमित्यभिमानेनोत्थानहेतुना प्रतिदृष्टान्तमात्रावष्टम्भेन बाधप्रतिरोधयोरन्यतरेण प्रत्यवस्थानं प्रतिदृष्टान्तसमः । यथा घटदृष्टान्तेनानित्यः शब्दः आकाशदृष्टान्तेन नित्यत्वस्यैव सिद्धेरिति बाधः । घटदृष्टान्तेनानित्यश्चेत् आकाशदृष्टान्तेन नित्यः किं न स्यात् । न चास्ति दृष्टान्तयोर्विशेष इति प्रतिरोधः । तदुक्तं प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रतिदृष्टान्तसम इति सूत्रखण्डेनेति । अयमस्योद्धारक्रमः । अधिकबलेन हि प्रतिदृष्टान्तेन बाधः स्यात् तुल्यबलस्यैव बाधकत्वे दृष्टान्तेनैव तद्बाधप्रसङ्गात् न च व्याप्तहेतुमत्तामन्तरेण साध्यधर्मवत्तामात्रेण प्रतिदृष्टान्तस्याधिकबलत्वं सम्भवति । ततश्च युक्ताङ्गहानिः । बाधं प्रत्यधिकबलस्याङ्गत्वेनानङ्गीकारात् तदिदमुक्तम् प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः अनधिकबलस्यैव प्रतिदृष्टान्तस्य बाधहेतुत्वे दृष्टान्तोऽपि किं बाधहेतुर्न स्यात् । बाधहेतुः स्यादेवेत्यर्थः । प्रतिरोधश्च तुल्यबलेन भवति न चानयोस्तुल्यबलत्वम् । दृष्टान्तस्य

प्रतिदृष्टान्तसमपक्षयोरेकसूत्रगतत्वप्रकाशनायोभयत्र सूत्रखण्डेनेत्युक्तम् । दृष्टान्तेनैव येन केनचिद्धर्मादिदृष्टान्तेनैव प्रतिदृष्टान्तहेतुत्वे च प्रतिदृष्टान्तमात्रस्य बाधहेतुत्वे

हेतुनावष्टब्धत्वात् प्रतिदृष्टान्तस्य तदभावादत्रापि युक्ताङ्गहानिः प्रतिरोधाङ्गस्य तुल्यबलत्वस्यानङ्गीकारात्। अत्रैवं सूत्रगमनिका। प्रतिदृष्टान्तमात्रस्य हेत्ववष्टम्भशून्यस्य हेतुत्वे दृष्टान्तोऽपि यद्यहेतुरविद्यमानहेतुः स्यात् तदाप्रतिरोधः न त्वयमहेतुः हेतुनावष्टब्धत्वादिति। अनङ्गं हेतुरिति चेत् तर्हि प्रतिदृष्टान्तः प्रतिषेधको न भवति गर्दभवदिति स्वव्याघात इति ॥ १७ ॥

अनुत्पन्ने साधनाङ्गे हेतुवृत्तेरभावतः।
भागासिद्धिः प्रसङ्गः स्यादनुत्पत्तिसमो मतः ॥१८॥

साधनाङ्गानां धर्मिलिङ्गसाध्यदृष्टान्ततज्ज्ञानानामन्यतमस्योत्पत्तेः पूर्वं हेतुवृत्तेरभावात् भागासिद्ध्या प्रत्यवस्थानमनुत्पत्तिसमः। तत्र धर्मिणोऽनुत्पत्तौ यथा अनित्यः शब्दः कार्यत्वादित्युक्ते अनुत्पन्नस्यापि शब्दस्य पक्षत्वात् तस्य चेदानीमभावादाश्रयभागासिद्धो हेतुरिति। लिङ्गानुत्पत्तौ यथा गुर्विदं पतनवत्वादित्युक्ते पतनोत्पत्तेः प्रागवस्थायामपि गुरुत्ववत्वस्य साध्यत्वेन तदवस्थस्यापि पक्षत्वात् भागासिद्धो हेतुरिति। साध्यानुत्पत्तौ यथा गन्धवद् घटः पार्थिव-

प्रतिरोधहेतुत्वे च सतीत्यर्थः। बाधहेतुः स्यादेव अतद्द्रव्यत्व(?)प्रस्तुतार्थसूचकत्वात्। अत्र प्रतिरोधपक्षे सूत्रगमनिका ॥ १७ ॥

त्वादित्युक्ते प्रथमक्षणे गन्धवत्त्वं नास्ति घटसमवायिकारणत्वेन तदुत्तरकालीनत्वाद्गन्धस्य। तथा च व्यापकस्य गन्धवत्त्वस्याभावेन व्याप्यस्यापि पार्थिवत्वस्याभावात् भागासिद्धो हेतुरिति। दृष्टान्तानुत्पत्तौ यथा द्रव्यमात्मा गुणवत्त्वाद् घटवदित्युक्ते प्रथमक्षणे घट एव निर्गुण इति दृष्टान्ते भागासिद्धो हेतुरिति। धर्मिज्ञानानुत्पत्तौ यथा द्रव्यं वायुः स्पर्शवत्त्वादित्युक्ते अज्ञातस्यापि वायोर्द्रव्यत्वं विवक्षितम्। न च तत्रायं हेतुः सिद्ध इति अज्ञातभागासिद्धो हेतुरिति। एवं लिङ्गादिज्ञानानुत्पत्तौ दर्शयितव्यम्। अकार्यं च कथमनित्यं निष्पतनं च कथं गुरु अपार्थिवं च कथं गन्धवत् निर्गुणं च कथं द्रव्यम् अनुपलब्धहेतुकं च कथं साध्यधर्मवदिति विरोधपर्यवसितं चेति। तदुक्तं प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसम इति। साधनाङ्गानामुत्पत्तेः प्राक् कारणस्य हेतोरभावात् प्रत्यवस्थानमनु-

---

तदुत्तरकालीनत्वात् द्वितीयक्षणभावित्वात् प्रथमक्षणे साध्याभावेऽपि कथं हेतोर्भागासिद्धिरित्यत्राह। तथा च व्यापकस्येति। दृष्टान्ते भागासिद्धं ततोऽसिद्धव्याप्तिकोऽयं हेतुरिति भावः। एवं लिङ्गादीति। प्रस्तुतप्रयोगे साध्यदृष्टान्तानामेकदेशाज्ञानेनापि भागासिद्धिरूहनीयेत्यर्थः। अस्या जातेरारोप्यान्तरमाह। अकार्यं चेति। अकार्यमनुपपन्नः शब्दः अपार्थिवं प्रथमक्षणे गन्धरहितत्वेनापार्थिवो घटः अनुपलब्धहेतुकं अज्ञातस्पर्शवत्त्वहेतुको घटज्ञानो(?)

त्पत्तिसम इत्यर्थः । अनुत्पन्नस्य स्वकार्यासामर्थ्यं द्वारं विरोधासिद्धी आरोप्ये उद्धारसूत्रं तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेध इति । उत्पन्नस्य शब्दादेस्तथाभावात् पक्षादिभावान्नाश्रयासिद्धिः । अनुत्पन्नस्यापि शब्दत्वात् कथं तद्व्यवच्छेद इति चेत् न तस्य तुच्छत्वेनाशब्दत्वात् तथा चाविषयवृत्तित्वम् । असिद्धिर्दोष एव न त्वपक्षीकृतस्येति । यदा कदाचिदुत्पन्नस्यापि पतनादेर्यावद्द्रव्यभाविना गुरुत्वेन व्याप्तेर्नोत्पत्तेः पूर्वमसिद्धिर्दोषः तथा च युक्ताङ्गत्यागः । व्याप्तिप्रकारमनपेक्ष्य दोषोद्भावनात् साध्यदृष्टान्तद्वारिकयोरपि तथा व्यापकत्वरूपं व्याप्यत्वरूपं चानपेक्ष्य प्रवृत्तेः । अज्ञानद्वारिकायां त्वविषयवृत्तित्वम् अज्ञानं हि पक्षादेर्दोषः न त्वनुपन्यस्तत्वेनापक्षादिभूतस्येति । एवमनङ्गीकारे सर्वत्र स्वव्याहतिरूहनीयेति ॥ १८ ॥

**सन्देहहेतुसद्भावात् सति निर्णयकारणे ।**
**संशयस्य प्रसङ्गो यः स संशयसमो मतः ॥ १९ ॥**

वायुः सर्वत्र सामान्यनिर्देशात् नपुंसकोक्तिः । तस्य तुच्छत्वेन भावप्रतियोगिनमित्युक्तत्वेन (!) साध्यदृष्टान्तद्वारिकयोरपि तथा पार्थिवत्वस्य यदा कदाचिदुत्पन्नेन गन्धवत्त्वेन व्याप्तत्वात् यदा कदाचिदुत्पन्नस्य गुणवत्त्वस्य द्रव्यत्वेन व्याप्तत्वाच्च पूर्ववद्युक्ताङ्गहानिरित्यर्थः । अत एवोपपादयति । व्यापकत्वरूपमिति । सर्वत्र अगृस्वपि पक्षेषु ॥ १८ ॥

निर्णयकारणोपन्यासे ऽपि संशयहेतूनां समानधर्मादीनामन्यतमसद्भावमात्रात् संशयापादनेन प्रत्यवस्थानं संशयसमः यथा अनित्यः शब्दः कृतकत्वाद् घटवदिति अनित्यत्वनिर्णयप्रमाणोपन्यासे यदि निर्णायकसद्भावान्निर्णयः स्यात् तर्हि नित्यानित्ययोः सामान्यघटयोः समानमैन्द्रियकत्वं संशयहेतुः शब्दे ऽस्तीति नित्यानित्यत्वे संशयोऽपि स्यात् स्वकारणसद्भावे ऽपि वा संशयानुत्पत्तौ निर्णयोपि न स्याद विशेषादिति । समानधर्मादिसंशयकारणविधुरस्य निर्णयकारणस्य निर्णयहेतुत्वमित्यभिमानः कारणम् । कार्यापेक्षया सत्प्रतिपक्षत्वमारोप्यं निर्णयप्रतिपक्षस्य संशयस्योपस्थानात् । व्याप्यापेक्षया विशेषणासिद्धिः संशयहेतुविरहे निर्णयहेतुत्वमित्यभिमानात् तस्य चात्राभावादिति। अत्र सूत्रम् । सामान्यदृष्टान्तयोरैन्द्रियकत्वे सामाने नित्यानित्यसाधर्म्यात् संशयसम इति । अत्र समान इत्यन्तमुदाहरणप्रदर्शनपरम् । नित्यानित्यशब्दौ सपक्षविपक्षावुपलक्षयतः साधर्म्यपदं च

---

समानधर्मादीनां समानधर्मानेकधर्मविप्रतिपत्त्या सद्भावमात्रादिति मात्रया निर्णयकारणसाहित्याभावे सतीति गम्यते संशयापादनेन प्रत्यवस्थानमिति विशेषः। अविशेषात् कारणसद्भावे विशेषाभावात् । उपस्थानात् आधानात् तस्य चात्राभावात् कृतकत्वादिनिर्णयहेतोः समानधर्मादिसंशयहेतुविरहस्याभावात् । उदाहरणप्रद-

संशयहेतुम् । ततश्च साध्यतदभावयोः संशयकारणा-दित्यर्थः । एवं च विषयतः कारणतश्च व्याप्तिर्भवति । दोषमूलं तु युक्ताङ्गहानिः निर्णायकाभावविशिष्टस्य समानधर्मादेः संशयहेतुत्वमित्यनङ्गीकारात् । अन्यथा निर्णायकसद्भावे ऽपि समानधर्मादेः संशयोत्पत्तौ तद-नुच्छेदप्रसङ्गात् । अयुक्ताङ्गाधिकत्वं वा समानधर्मादि-विरहस्य निर्णयाङ्गत्वाभ्युपगमात् व्याघातस्तु सुगम एव । सूत्रं तु साधर्म्यात् संशये न संशयो वैधर्म्यादु-भयथा वा संशये ऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युप-गमाच्च सामान्यस्याप्रतिषेध इति । तत्र साधर्म्यवैध-र्म्याभ्यां संशायकनिर्णायकावुपलक्षयति । सामान्य-ग्रहणेन च संशयहेतुम् । एतेनायमर्थः समानधर्मादेः संशये जनयितव्ये निर्णायकसद्भावान्न संशयः स्यात् । तस्मिन्नपि सत्येव संशयोत्पत्तौ संशयानुच्छेदप्रसङ्गः समानधर्मादेर्नित्यं संशयहेतुत्वं च नाभ्युपगच्छामः ।

---

र्शनपरं न लक्षणोपयुक्तमिति भावः । साध्यतदभावयो-रिति । साध्यतद्विपरीतयोः संशयकारणस्य समानध-र्मादेः सद्भावादित्यर्थः । एवं चेति । नित्यानित्यसाधर्म्य-शब्दानां एवमर्थस्वीकारे सति सर्वानुमानेषु सर्वसंशयहे-तुरियं जातिः प्रवर्तत इत्यर्थः । अन्यथा युक्ताङ्गहीनत्वान-ङ्गीकारे । तदनुच्छेदप्रसङ्गात् संशयानवस्थाप्रसङ्गात् । स्व-व्याघातस्त्विति जातिवादिनः प्रतिषेधानुमाने ऽपि समा-नधर्मादिसद्भावात् प्रतिषेधवति कृतकत्वे हेतुरसिद्धो

ततश्च संशयापादनलक्षणप्रतिषेधो नास्तीति सूत्रार्थः ॥ १९ ॥

**तुल्यत्वमभ्युपेत्यैव परहेतोः स्वहेतुना ।**
**बाधेन प्रत्यवस्थानं प्रक्रियासम इष्यते ॥ २० ॥**

अभ्युपगतानधिकबलेन प्रतिप्रमाणेन परकीयहेतोर्बाधाभिमानेन प्रत्यवस्थानं प्रकरणसमा जातिः । तदुक्तम् उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसम इति । साधर्म्यमत्र प्रतिप्रमाणमात्रोपलक्षणपरम् । प्रक्रियत इति प्रक्रिया साध्योर्थः तस्य सिद्धेर्निश्चयादित्यर्थः । तथा च प्रतिधर्मसमानो भेदसिद्धिः । यथा अनित्यः शब्दः कार्यत्वादित्युक्ते नैवं श्रावणत्वेन नित्यत्वस्य सिद्धेः । प्रत्यभिज्ञाबाधितत्वाद्वेति प्रतिप्रमाणोपलम्भः कारणमस्याः बाध आरोप्यः । दुष्टत्वमूलं तु सौत्रः स्वव्याघातः । यथा प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेरिति । अयमर्थः स्थापनानधिकबलात् प्रतिपक्षसाधकप्रमाणात् प्रक्रियमाणार्थसिद्धेर्हेतोर्नास्मत्पक्षस्य बाधलक्षणप्रतिषेधः । प्रतिषेधानधिकबलेनैव स्थापनाहेतुना भवत्प्रतिपक्षस्यास्मत्साध्यस्य सिद्धेरिति बाधाङ्गस्याधिकबलत्वस्यानङ्गीकारो युक्ताङ्गत्यागश्चेति हृदयम् ॥ २० ॥

---

विरुद्धः कालात्ययापदिष्टः प्रकरणसमो वा न वा आद्ये प्रस्तुतहेतुरपि तथा द्वितीये ऽर्थादापन्नः स्यात् तथेति सकलहेत्वाभासमसङ्गो द्रष्टव्य इत्यर्थः (?) ॥ १६ ॥

**हेतोर्विकल्प्य साध्यार्थपूर्वापरसहोदयम् ।**
**त्रेधापि तस्य हेतुत्वभङ्गो हेतुसमो भवेत् ॥ २१ ॥**

इयं च कृतिज्ञप्तिसाधारणी जातिः । साध्यार्थात् पूर्वं पश्चात् तेन सह वा साधनस्योदयः उत्पत्तिर्ज्ञानं वा तत्र सहभावो विशेषादहेतुः पूर्वभावे साध्यप्रतियोगित्वेन साधनत्वस्य साध्याभावे किमपेक्षेदं साधनं स्यादिति साधनत्वाभावः । पश्चाद्भावे पूर्वसिद्धस्य साध्यस्य कथमिदं साधनं स्यादिति । त्रेधापि हेतुत्वभङ्गेन प्रत्यवस्थानमहेतुसमः प्रतिकूलतर्कोद्धारं साध्यसाधनभावो दूष्यः इतरेतराश्रयलक्षणप्रतिकूलतर्कप्रतिघात आरोप्यः सूत्रं तु त्रैकाल्यासिद्धेर्हेतोरहेतुसम इति । सेयं जातिः सूत्रकारैरेव प्रमाणपरीक्षायामुदाहृतैव । प्रत्यक्षादीनामप्रामाण्यं त्रिकाल्यासिद्धेरिति । उद्धारसूत्रम् न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिरिति । ज्ञप्तिपक्षे तावत् त्रिकालयुक्तादपि हेतोर्यथायथं साध्यज्ञानदर्शनान्न त्रैकाल्यासिद्धिरिति । भग्नव्याप्तिकत्वात् तर्कस्य युक्ताङ्गहानिः । कृतिपक्षे तु पूर्वकालीनादेव हेतोः पश्चाद्भाविनः साध्यस्योत्पत्तेर्न त्रैकाल्यासिद्धिः । साध्यप्रतियोगिनः साधनस्य कथं तदभावे सिद्धिरिति चेत् न साधनत्वव्यवहारस्तावद्बुद्धिस्थेनापि साध्येन सिध्यतीति न स्वरूपसत्तामपेक्षते । तद्व्यापारश्च स्वशक्तिमात्रेण भवन्

प्रतियोग्यधीनः भिन्नकालयोः साध्यहेत्वोः कथं सम्बन्ध इति चेत् । साध्यसाधनसम्बन्धस्य तथाविधस्यैव दृष्टत्वात् ततश्चानङ्गाभ्युपगमः समानकालत्वस्य सम्बन्धानङ्गस्यैवोररीकरणात् । स्वव्याघातप्रदर्शनपरमपि सूत्रम् प्रतिषेधानुपपत्तेश्च प्रतिषेध्याप्रतिषेध इति । निगदव्याख्यातमेतत् ॥ २१ ॥

व्याप्तिं विना वादिवाक्यादर्थाक्षेपाभिमानतः ।
विपरीतसमारोपमर्थापत्तिसमं विदुः ॥ २२ ॥

असत्यामेव व्याप्तौ वादिवचनमात्रेणार्थादाक्षिप्तमित्यभिमानादुक्तविपरीतमारोप्य प्रत्यवस्थानमर्थापत्तिसमः । तदुक्तम् । अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसम इति । उक्तविपरीताक्षेपशक्तिरर्थापत्तिः ततस्तदाभासो लक्ष्यते अर्थापत्त्याभासात् प्रतिपक्षसिद्धिमभिधाय प्रत्यवस्थानमर्थापत्तिसम इत्यर्थः । यथा अनित्यः शब्द इत्युक्ते ऽर्थादाक्षिप्तमन्यन्नित्यमिति विशेषविधौ परिसंख्यान्यायेन शेषनिषेधस्य नान्तरीयकत्वात् । तथा च घटादेर्नित्यत्वात् साध्यविकलो दृष्टान्त इति विरोधः । अनित्यसाधर्म्यादनित्यत्वोक्तौ नित्यसाधर्म्यान्नित्य इत्यापन्नमिति प्रतिरोधः । अनुमानादनित्य इत्युक्ते ऽर्थादापन्नं प्रत्यक्षान्नित्य इति बाधः । सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादनित्य इत्युक्ते ऽर्थादापद्यते तदभावान्नित्य इति ।

ततश्चाप्रत्यक्षेप्वाद्यादिशब्देषु भागासिद्धिः । अस्मिन्नेव हेतावुक्ते कृतकत्वमनित्यत्वसाधनं न वेति विकल्प्य न चेदिदमपि न स्यात् अविशेषात् । साधकश्चेदुच्येतार्थादापद्यते नान्यत् साधकमिति । एवं तस्मिन्नेव प्रयुक्ते कृतकत्वमनैकान्तिकं न वेति विकल्प्य पूर्वत्रेदमपि तथा स्यादविशेषात् । यदि नेत्युच्यतेऽर्थादापन्नमन्यदनैकान्तिकमित्यादिसर्वदोषोपसंहारो द्रष्टव्यः । स्विशेषविधिः शेषान्तरनिषेधं गमयतीत्यभिमान उत्थानहेतुः । यथायथमसिद्धाद्यन्यतममारोप्यं व्याप्तिमनपेक्ष्यानुक्तमात्राक्षेपे त्वत्पक्षहानिरपि स्यात् । अनुक्तत्वलक्षणदूषणोपाधिसमाक्रान्तत्वादिति स्वव्याघातः युक्ताङ्गहानिश्च व्याप्तिमनपेक्ष्य प्रवृत्तेः । तदिदमुभयमप्यसूत्रयत् अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेरिति ॥२२॥

---

व्याप्तिमनपेक्ष्य अग्निरस्तीत्युक्ते ऽर्थादापन्नं तत्र शैत्यं नास्तीति जलमस्तीत्युक्ते ऽर्थादापन्नं तत्राग्निर्नास्तीत्यादि । अव्याप्त्यमविवक्षानुक्तापक्षेपस्तं विहायेत्यर्थः (?)। अनुक्तत्वलक्षणा अनुक्ताक्षेपलक्षणा । अनुक्तस्येति । वादिनानुक्तस्य वादिसाध्यविपरीताक्षेपशक्तेर्हेतोर्वादिवाक्यप्रतिषेधे सति जातिवादिपक्षस्य च तत एव हानिरुपपन्ना । अनुक्तत्वादनुक्तत्वाक्षेपरूपदूषणोपाधिसद्भावादिति स्वव्याघातः । जातिवायुक्तोपपत्तेर्वायुक्ताभावेनैकान्ततः प्रतिषेधकत्वाभावायुक्ताङ्गहानिश्चेति सूत्रार्थः ॥ २२ ॥

**धर्मेणैकेन केषाञ्चिदविशेषप्रसञ्जनम् ।**
**साधनप्रतिबन्ध्या यत् सोऽविशेषसमो मतः ॥ २३ ॥**

केषाञ्चित्पदार्थानां साधारणेनधादिसाधनव्यतिरिक्तेन केनचिद्धर्मेण तेषामेकत्वेनैकधर्मत्वेनैकाकारधर्मत्वेन वा यदविशेषप्रसञ्जनं स्थापनाहेतुप्रतिबन्ध्यभिप्रायेण क्रियते सोऽविशेषसमः । एवमस्याः प्रवृत्तिः यदि कृतकत्वेन धर्मेण शब्दघटयोरनित्यतारूपधर्माविशेषः स्यात् तर्हि सत्त्वादिना धर्मेण परेषामपि पदार्थानामविशेषः किं न स्यात् । अत्रैकत्वेनाविशेषे पक्षाद्यविभागः । एकधर्मत्वेनाविशेषे सर्वस्याप्येकजातीयत्वम् । एकाकारधर्मत्वेनाविशेषे सर्वस्याप्यनित्यता स्यात् । एवं च पृथिव्यादीनां नवानां द्रव्य-

---

एकत्वेन एकस्यैव ह्यविशेषो मुख्यः स्यादतः पक्षमात्रत्वेन एकधर्मत्वेन सर्वेषामेकेन धर्मेणान्वितत्वेन प्रतिपदार्थभिन्नत्वेऽप्येकरूपधर्मत्वेन । सत्त्वादिना सत्त्वप्रमेयत्ववाच्यत्वज्ञेयत्वादिधर्मसङ्ग्रहेन । पक्षाद्यविभागः सत्त्वादिहेतुना सर्वस्यापि पक्षैक्ये सिद्धसाधनादिहेतोः पक्षसपक्षविपक्षविभागाभावादनुमानाप्रवृत्तिरिति भावः । एकजातीयत्वं सत्त्वादिना सर्वस्य साध्यधर्मजातीयत्वसिद्धौ पूर्ववदनुमानाप्रवृत्तिरिति भावः । सर्वस्याप्यनित्यता स्यादिति । सत्त्वादिना सर्वस्य प्रस्तुतसाध्यधर्मवत्त्वे सिद्धे व्याप्त्यसिद्धिरनुमानाप्रवृत्तिरित्यर्थः । विपयहेतोरनियमार्थमुदाहरणान्तराण्याह । एवं च पृथिव्यादीनामिति । एवं

त्वेन धर्मेण क्रियावत्त्वेनाविशेषः स्यात् । शब्दघटयो-रैन्द्रियकत्वेन मूर्तत्वेनाविशेषः स्यात् । एवं घटजातीयत्वं घटतादात्म्यं चेति । कस्यचिद्धर्मस्य कञ्चित्प्रत्यसाधकत्वदर्शनं कारणमस्याः । असाधकत्वमारोप्यम् । सूत्रं तु एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसम इति । एकधर्मोपपत्तेरविशेष इति साधनप्रतिबन्द्यभिप्रायेणेदं प्रत्यवस्थानमिति दर्शितम् । सद्भावः सत्त्वं तच्च साधारणधर्ममात्रोपलक्षणम् । तस्योपपत्तेः सर्वस्याविशेषापादकधर्माक्रान्तसमुदायस्यैकत्वाद्यविशेषप्रसङ्गापादनेन प्रत्यवस्थानमित्यर्थः । अस्याः स्वव्याघातः सुगम एवेति युक्ताङ्गहानिमाह सूत्रकारः क्वचिद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभाव इति । क्वचित् सत्तादौ हेतौ सति तद्व्यापकाभिमतस्य तादात्म्यादिधर्मस्यानुपपत्तेः । क्वचित्कार्यत्वादौ सति तद्व्यापकस्यानित्यत्वादिधर्मस्योपपत्तेः प्रतिषेधाभाव इति । पूर्वत्र व्याप्त्यभावादुक्त-

---

घटजातीयत्वमिति । ऐन्द्रियकत्वेनोभयोरेकजातिमत्त्वमेकत्वं स्यादित्यर्थः । असाधकत्वमारोप्यम् आश्रयासिद्धिस्वरूपासिद्धसाधारणत्वादिदोषदुष्टत्वाद्धेतोरसाधकत्वमारोप्यमित्यर्थः । प्रतिबन्द्यभिप्रायेण दृष्टान्तबुद्ध्या । अविशेषापादनात्मकधर्मः सत्त्वद्रव्यत्वैन्द्रियकत्वादिः । सुगम एव विनीतमसाधकमाश्रयासिद्धत्वात्(?) प्रयाजास्तित्वसाधकत्वविश्वपरिणामित्ययदित्यादि प्रतिषेधदे-

त्र तद्भावादिति भावः ॥ २३ ॥

**अस्मत्पक्षे ऽपि किमपि प्रमाणमुपपत्स्यते[1] ।**
**त्वत्पक्षवदितिप्राप्तिरुपपत्तिसमो मतः ॥ २४ ॥**

वादिना साध्यसिद्धये प्रमाणे ऽभिहिते मत्पक्षे किमपि प्रमाणं भविष्यति त्वत्पक्षवदिति प्रमाणसद्भावमात्रोपपादनेन प्रत्यवस्थानमुपपत्तिसमः । यथा अनित्यः शब्दः कार्यत्वादित्युक्ते यद्यनित्यत्वे प्रमाणं कार्यत्वमस्तीत्यनित्यः तर्हि नित्यत्वपक्षे ऽपि किञ्चित्प्रमाणं भविष्यति । वादिप्रतिवादिनोरन्यतरोक्तत्वात् त्वत्पक्षमत्पक्षयोरन्यतरत्वात् प्रकृतसन्देहविषयत्वात् विप्रतिपत्तिविषयत्वाद्वा त्वत्पक्षवत् । तथा च बाधः प्रतिरोधो वेति । इयं च प्रतिधर्मसमकरणसमाभ्यां भिद्यते अत्र प्रमाणस्यैवोपपादनात् तत्र सिद्धेन प्रमाणेन साध्योपपादनात् अस्याः सामान्यतः प्रमाणसम्भावनाद्वारं सूत्रं तु उभयकारणोपपत्तेरुपपत्तिसम इति । वादिसाधनानन्तरं प्रतिवादिनापि कारणस्य प्रमाणस्योपपादनादर्थादुभयकारणोपपत्तेरुप-

---

तावपि यथाश्रयासिद्धत्वेनोभयोरसाधकत्वेनाविशेषः स्यादित्यादिः सुखवेद्य इत्यर्थः ॥ २३ ॥

प्रकृतसन्देहविषयत्वात् शब्दो नित्योनित्यो वेति सन्देहे सतीदमनुमानं प्रवर्तते ऽतस्तद्विषयत्वादित्यर्थः । साध्यस्य वादिसाध्यविपरीतः स्यात् ॥ २४ ॥

---

(१) मुपपद्यते-पा॰ A पु॰ ।

पत्तिः न तु प्रतिवादिनैवोभयत्र प्रमाणोपपादनादिति । उपपत्तिकारणानुज्ञानादप्रतिषेध इति सूत्रारूढः स्वव्याघातः वादिसाध्योपपत्तेः कारणं प्रमाणं तस्य पक्षवदिति निदर्शयता प्रतिवादिनाप्यनुज्ञानान्न प्रतिषेधः । अनुज्ञाप्रतिषेधयोरेकत्रासम्भवादिति युक्ताङ्गहानिश्च । बाधप्रतिरोधौ प्रतिप्राबल्यसाम्ययोरङ्गत्वादनुपन्यस्तस्य प्रमाणस्य तन्निरूपणासम्भवाच्चेति ॥ २४ ॥

अवधारणतात्पर्यं वादिवाक्ये विकल्प्य यत् ।
तद्बाधात् प्रत्यवस्थानमुपलब्धिसमो हि सः [(१)] ॥ २५ ॥

वादिवाक्यस्यावधारणतात्पर्यं तावदारोप्य तद्विशेषं विकल्प्य सर्वथाऽवधारणबाधेन प्रत्यवस्थानमुपलब्धिसमः । यथा पर्वतोऽग्निमानित्युक्ते किं पर्वत एवाग्निः उत पर्वतोऽग्निमानेवेति । न प्रथमः महानसादीनामप्यग्निमत्त्वोपलम्भात् । न द्वितीयः अग्निं विनापि कदाचित्पर्वतस्योपलब्धेः । ततश्च साध्याभावे ऽपि धर्म्युपलभ्यत इति बाधः । तथा तस्यामेव

---

तद्विशेषमवधृतार्थविशेषम् । किं पर्वत एवेति । किं पर्वत एवाग्निमानुताग्निमानेव पर्वत इति विकल्प्येत्यर्थः ।

---

(१) समो मतः—पा॰ A पु॰ ।

प्रतिज्ञायां धूमवत्त्वादित्युक्ते धूमः किं धर्मिण्यन्ययोगव्यवच्छेदेन सम्बध्यते उतायोगव्यवच्छेदेन। न प्रथमः पर्वते वृक्षादेरप्युपलब्धेः । न द्वितीयः धूमाभावे ऽपि कदाचित् पर्वतोपलब्धेः। ततश्च साधनाभावे ऽपि धर्म्युपलभ्यत इत्यसिद्धिः । तथा पूर्वोक्तद्वयसमाहारेण साध्यसाधनयोरभावे ऽपि धर्म्युपलभ्यत इति बाधासिद्धी। तथा तस्मिन्नेव प्रयोगे किमत्रावधार्यते । किं पर्वत एवाग्निमान् उताग्निमानेव पर्वतः किं धूमवत्त्वादेवेति। न प्रथमद्वितीयौ महानसादेरग्निमत्त्वोपलम्भात् पर्वते वृक्षाद्युपलब्धेश्च । न तृतीयः धूमाभावे ऽपि तत्रत्यालोकादेरग्निमत्त्वोपलम्भात् । तेन साधनाभावे ऽपि साध्योपलम्भादव्याप्तिरिति। समव्याप्तिके तु कृतकत्वापरामर्शे ऽपि प्रत्ययभेदभेदित्वादेः शब्दानित्य-

---

अग्निमत्त्वोपलम्भात् ततो बाधितः प्रतिज्ञातार्थ इति शेषः। तथा पूर्वोक्तेति । एकैकं विहाय प्रतिज्ञाहेतू युगपत् पूर्ववद्विकल्प्येत्यर्थः । एवं प्रतिज्ञाहेत्वोः प्रत्येकसमुदायपरमवधारणविकल्पं दूषयित्वा तत्साध्यस्यैकस्यावधारणं विकल्प्याहं दूषयति। तथा तस्मिन्नेवेति। किं पर्वत एवेति किं धूमवत्त्वात् पर्वतोऽग्निमानेवेति अथ धूमवत्त्वादेव पर्वतोऽग्निमानिति वा साध्यत इत्यर्थः।आलोकादेरित्यादिशब्देन महानसादिशब्दे विशेषः।अत्र विशेषश्च गृह्यते(?) सपक्षैकदेशवृत्तिहेतावेवंविधप्रत्ययस्यानावकाशः सपक्षव्यापिनि कथमिति चेत् तत्राह। समव्याप्तिके त्विति। कृतकत्वापरामर्शे ऽपीति । शब्दोऽनित्यः कृतकत्वादित्युक्ते किमत्राव-

त्वोपलब्धेरव्याप्तं कृतकत्वमिति ज्ञानाभावद्वारेण प्रवृत्तिर्दर्शिता। तथा साध्याभावे ऽपि साधनमुपलभ्यत इति अतिव्याप्त्यापि प्रत्यवतिष्ठते। यथा केवलान्वयिप्रयोगे साध्याव्यापीदं साधनं व्यतिरेकाभावात् प्रसिद्धानैकान्तिकवदिति। अत्र सूत्रं निर्दिष्टकारणाभावे ऽप्युपलम्भादुपलब्धिसम इति। वादिना निर्दिष्टस्य प्रमित्यङ्गस्य व्यापारवतोऽप्यभावे साध्योपलम्भात् प्रत्यवस्थानमित्यर्थः। बीजं तु वाक्यस्यावधारणतात्पर्यं तावदवश्याभ्युपगन्तव्यम्। एवकारार्थमनादृत्याप्यार्थेन प्रयोगादित्यभिमानेनावधारणविकल्पे क्रियमाणे तदनुपपत्तिः। बाधादय आरोप्याः दोषमू-

---

धार्यते किं शब्द एवानित्य इति वा उत कृतकत्वादेव शब्दोनित्य इति वा। नाद्यः घटादेरप्यनित्यत्वात्। न द्वितीयः कृतकत्वापरिज्ञाने ऽपि तीव्रस्तीव्रतरस्तीव्रतमः शब्द इत्यादिविलक्षणबुद्धिपरिच्छेद्यत्वसामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादेर्हेतोः शब्दानित्यत्वसिद्धेः कृतकत्वहेतोरप्रयोजकत्वमसङ्गादित्यर्थः। न केवलमव्याप्त्या प्रत्यवस्थानमियं जातिः किं त्वतिव्याप्त्यापीत्याह। तथा साध्याभावे ऽपीति। प्रमित्यङ्गस्य अनुमितिजनकस्य व्यापारवतः प्रत्यावृत्तसाध्यज्ञापनशक्तिमतः हेतोरिति शेषः। एवकारार्थमवधारणम्। आर्थेन कारणान्तरादपि तद्धर्मोपपत्तेरित्यत्रापि शब्दार्थेन प्रयोगात् सूत्रकारस्येति शेषः। बाधासाधारणस्वरूपव्याप्यत्वासिद्धयः। अयोग-

समयुक्ताङ्गाधिक्यम् । अयोगव्यवच्छेदमात्रेणावधारणोपपत्तावन्ययोगव्यवच्छेदेनावधारणास्वीकारात् । तथाभ्युपगमे स्वोक्तिव्यापनाद्व्याघातः । तदुक्तम् कारणान्तरादपि धर्मोपपत्तेरप्रतिषेध इति । अनेन हेत्वन्तरादपि साध्योपपत्तिं वदन् हेतावधारणानङ्गीकारप्रदर्शनेन सर्वत्रापि तदनङ्गीकारं सूत्रयतीति ॥ २५ ॥

स्वस्मिन् विषयिधर्माणां तदतद्रूपकल्पनात् ।
विपर्ययप्रसङ्गः स्याज्जातिश्चानुपलब्धितः ॥ २६ ॥

विषयनिघ्ना धर्मा विषयिधर्माः । ते चोपलब्ध्यनुपलब्धी इच्छानिच्छे द्वेषाद्वेषौ कृत्यकृती शक्त्यशक्ती उपपत्त्यनुपपत्ती व्यवहृत्यव्यवहृती भेदाभेदावित्येवमादयः । एते स्वात्मनि ताद्रूप्येण वर्तन्ते उताताद्रूप्येणेति विकल्प्योभयथापि स्वरूपव्याघातप्रसञ्जनेन प्रत्यवस्थानमनुपलब्धिसमः । नन्वेवं विषयिधर्मसमेत्यभिधीयेत सत्यं सैवार्थानुगता सञ्ज्ञा उपलक्षणसञ्ज्ञे-

---

व्यवच्छेदमात्रेण यदा धर्मी तदा हेतुः स्वेन सम्बद्धात इति पक्षं विहाय यदा हेतुः तदा धर्मिणा सम्बद्धात एवेत्यङ्गीकारमात्रेण । सर्वत्रापीति । प्रतिज्ञासाध्यादावप्यवधारणानङ्गीकारं सूत्रितवानित्यर्थः ॥ २५ ॥

विषयनिघ्ना विषयमवलम्ब्य प्रवृत्ताः धर्माः कस्यचित् गुणभूताः उपपत्त्यनुपपत्तीसम्भावनासम्भवने । ताद्रूप्येणानुलब्ध्यादिरूपेण उताताद्रूप्येण यद्वा ताद्रूप्येण न वर्तन्ते

यमनुपलब्धिसमेति। तर्ह्युपलब्धिरेव मूर्द्धाभिषिक्तो विपर्ययिधर्म इति तदेवोपलक्षणमुचितम् नैवम् उपलब्धिसमसङ्करप्रसङ्गात्। केचित्तु भावात्मकेषु विषयिधर्मेषु प्रवृत्तमिदमेव प्रत्यवस्थानमुपलब्धिसमः अभावात्मकेषु त्वनुपलब्धिसम इति व्याचक्षते। तदशिष्यम् अनादेशिकत्वात्। व्यवच्छेदकवाक्यार्थरुचीनां पूर्वोदाहृतप्रत्यवस्थानस्याजातित्वप्रसङ्गाच्च तस्यान्यत्रानन्तर्भावात्। उपलब्धं लिङ्गं साध्याङ्गमिति तदर्थोऽयं प्रयोगः। सा चोपलब्धिः स्वात्मन्यनुपलब्धिरूपेण वर्तते चेत् साप्युपलभ्या स्यात् नोपलब्धिः विषय-

---

इत्यर्थः अनुपलब्धिसमः। सङ्करेति। जातिद्वयस्योपलब्धिसम इत्येकनामप्रसङ्गादित्यर्थः। भावात्मकेषु अनन्तरप्रयोगेषु उपलब्धीच्छाद्वेषादिषु अभावात्मकेष्वनन्तरप्रयोगेष्वनुपलब्ध्यनिच्छादिषु। अशिष्यमसाम्प्रदायिकमयुक्तं च। अनादेशिकत्वाद्भाष्यकारादिभिरनुक्तत्वात्। व्यवच्छेदवाक्यार्थरुचीनां नित्यसामान्यानङ्गीकारेण घटादिशब्दानां घटत्वादिसमारोपश्लिष्टव्यक्तिवाचकत्वाभावेनायं घट इति शब्दस्यायं पटादिर्न भवतीति व्यावृत्तिरेवार्थ इतिवदतां बौद्धानामित्यर्थः। पूर्वोदाहृतेति। उपलब्धिसमायां प्रयुक्तावधारणविकल्पस्य अजातित्वप्रसङ्गात् अङ्गाधिक्येनासदुत्तरस्य छलायनङ्गभूतस्य जात्यन्तरोक्तलक्षणहीनस्य भावाभावधर्मरहितस्य च जातावप्यन्तर्भावाभावप्रसङ्गः। अत एव जातिसामान्यलक्षणमतिव्याप्तं स्यादिति भावः। तदर्थोऽयमिति। लिङ्गपक्षदृष्टान्तादीनामुपलब्धिप्रयोजना-

वत् । अवृत्तेरुपलब्धिरूपेणावर्तमानघटादिवदुपल-
ब्धिर्न स्यादिति तद्विषयो लिङ्गादिर्नोपलभ्यः स्या-
दिति व्यर्थः प्रयोगः । एवमनुपलब्धत्वाच्छब्दो नास्ती-
त्युक्ते अनुपलब्धेः स्वात्मनि तद्रूपेण वृत्तौ विषयवत्
स्वस्याप्यनुपलब्धत्वात् तद्वदेवाभावप्राप्तावनुपलब्ध्य-
भावश्चोपलब्धिरेवेति विपरीतापत्तिः स्वात्मनि स्व-
रूपेणावृत्तौ तु सैव न स्यादिति तद्विषयः शब्दोनुप-
लब्धो न स्यादित्युभयथाप्यसिद्धो हेतुः तदुक्तम् तद-
नुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनु-
पलब्धिसमः । यदि ताद्रूप्येण वृत्तावप्यनुपलब्धा न भ-
वति शब्दोप्यनुपलब्धो न स्यात् अनुपलब्धोपि वा

---

यमनुप्रयोग इत्यर्थः । उपलब्धिरूपेणेति । यथा स्वस्मिन्ननुप-
लब्धिरूपेण वर्तमानो घटादिर्नोपलब्धिर्भवत्येवमित्यर्थः ।
तद्विषय उभयमप्यनुपलब्धिरूपोपलब्धिगोचरः । तद्वि-
षय उभयप्रकारेणापि अनुपलब्धिरूपानुपलब्धिगोचरः ।
असिद्ध इति हेतुः पूर्वं श्रुतशब्दोद्य नास्ति अनुपलब्धत्वा-
दितिहेतुरसिद्धस्ततः शब्दोऽनित्य इत्यभिप्रायः । तदनुपल-
ब्धेरिति । तस्य शब्दादेरनुपलब्धेः कदाचिदनुपलब्धत्वात्
कदाचिन्न तद्द्वयसमाहारेणोपलब्धत्वात् कदाचित् स्वरू-
पाभावान्न स्वभावसिद्धौ तस्य शब्दादेरनुपलब्धिरिति प-
रोपलब्धिरुपपन्ना तत एव नित्यत्वप्रसङ्ग इति प्रत्यवस्थान-
मनुपलब्धिसम इति सूत्रार्थः । ताद्रूप्येण वृत्तावप्यनुप-
लब्धिः स्वस्यामनुपलब्धिरूपेण प्रवर्तत इति पक्षाङ्गीकारे
ऽपि अनुपलब्धो न भवति शब्द इत्यनुवर्तते तदेवोपपाद-

नैव नास्तीत्युच्येत । तर्ह्यनुपलब्धत्वादिति हेतुस्तत्रा-नैकान्तिकः शब्दे नास्तितां न साधयेदिति । एवमन्य-त्रापि विषयिधर्मेषु दर्शयितव्यम् । अनुमानविषयाव-लम्बनेनापि प्रवर्तते । यथा सन्दिग्धे न्यायः प्रवर्तते सन्देहस्य स्वात्मनि ताद्रूप्येण वृत्तौ विषयवत् स्वयमेव सन्दिग्धः कथं विषयं सन्दिग्धं कुर्यात् । अवृत्तौ तु घटा-दिवत् सन्देहो न स्यादिति न्यायविषयाभावः । तथा शब्दप्रत्यभिज्ञानं भ्रान्तमित्युक्ते भ्रमयोगाद्भ्रान्तिः । भ्रमः स्वस्मिंस्ताद्रूप्येण वृत्तौ स्वयमेव भ्रान्तः कथं विषयं भ्रान्तं कुर्यात् । अन्यथा स्वव्याघातः । इयं संशयपरी-क्षायां सूत्रकारैरुदाहृता विप्रतिपत्तौ च संप्रतिपत्तेः, अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थाया इति ।

यति । अनुपलब्धोपीति । अनुपलम्भात्मकत्वात् अनुपल-ब्धेरिति सूत्रकारवचनादनुपलब्धावपि भवत्येवानुपलब्धिः ततस्तद्विषयः शब्दोऽनुपलब्धः ततः शब्दो हेतुरिति भावः । तत्पक्षे दोषान्तरमाह । तर्ह्यनुपलब्धत्वादिति । तत्र अनुप-लब्धत्वे ऽपि सत्यामनुपलब्धौ । एवमन्यत्रापीति । साध्या-र्थज्ञानेच्छायां सत्यां तन्निवृत्त्यये खल्वनुमानप्रसङ्गः सा चेच्छा स्वात्मनि ताद्रूप्येण वर्तते वा न वा उभयथापीच्छा न स्यात् अतस्तन्निवर्तकप्रयोगो व्यर्थ इत्यादिकमूहनीय-मित्यर्थः । पूर्वमनुमानमवलम्ब्यास्या जातेः प्रवृत्तिरुक्ता इदानीमनुमेयमवलम्ब्य प्रवृत्तिमाह । अनुमानविषयाव-लम्बनेनापीति । अन्यथा ताद्रूप्येणावृत्तौ । विप्रतिपत्तौ चेति । विप्रतिपत्तिः संशयकारणमिति न वक्तव्यं विप्रति-

तथा शब्दपरीक्षायां अन्यदन्यस्मादनन्यदित्यन्यताभावः अनियमे नियमान्नानियम इति । अस्यां च विषयिधर्मोपलम्भः कारणम् । आपाततः प्रतिकूलतर्क आरोप्यः अतिपीडायामसिद्धिरनैकान्तिकं वा । प्रत्युत्तरं विषयिधर्मः स्वात्मनि ताद्रूप्येण वर्तत इति पक्षं कक्षीकुर्मः । न च स्वात्मनो विषयीकरणं किं तु तदात्मकत्वमिति न स्वरूपव्याघातप्रसक्तिः । तदिदमनङ्गाधिकं स्वात्मनो विषयत्वस्यानङ्गीकारात् । तदुक्तम् अनुपलम्भात्मकत्वादनुपलब्धेरहेतुरिति । अस्याप्युपलक्षणत्वादुपलम्भात्मकत्वादुप-

---

परिरूपेण स्वात्मनि वृत्तावृत्तौ विप्रतिपत्त्यभावादव्यवस्थात्मकं ज्ञानं संशय इति न वक्तव्यमुभयथाप्यव्यवस्थाया अभावादिति सूत्रतात्पर्यम् । अन्यदन्यस्मादिति । पूर्वोक्तेभ्यः पश्चादुक्तानां वर्णानामन्यत्वात् न वर्णा नित्या इति न वक्तव्यम् अन्यत्वस्य धर्मेभ्योऽन्यत्वेन अनन्याभावादभिव्यञ्जकानां प्रतिवादिनामभिव्यङ्ग्यविशेषे नियमाभावान्न वर्णविशेषाः प्रयत्नव्यङ्ग्या इति न वक्तव्यम् उभयथाप्यनियमाभावादिति सूत्रान्तराभिप्रायः । प्रतिकूलतर्क आत्माश्रयरूपः न विषयीकरणं विषयवन्न स्वमवलम्ब्य प्रवर्तनं तदात्मकत्वं तत्तद्रूपम् अनुपलम्भात्मकत्वादनुपलब्धिरूपत्वादनुपलब्धेरसत्त्वप्रतिपादकहेतुना स्वानुपलब्धेरहेतुरिच्छात्मकत्वादिच्छाया अहेतुरित्याद्या-

लब्धो हेतुरित्यादिसूत्रविपरिणामेन सर्वत्र समाधान-मूहनीयम् ॥ २६ ॥

**साधर्म्यादेर्विपक्षाणां सपक्षत्वप्रसञ्जनम् ।**
**साधनप्रतिबन्धा यत् स ह्यनित्यसमोदयः ॥ २७ ॥**

साधर्म्येण वैधर्म्येण वा वादिना साध्योपसंहारे कृते तत्प्रतिबन्द्यभिप्रायेण साधर्म्यादिना सर्वस्यापि साध्यधर्मवत्तां प्रदर्श्य विपक्षस्यापि सपक्षत्वापादानमनित्यसमः। तर्हि साध्यधर्मसमेति लक्ष्येति। सत्यम् एपैवान्वर्थसञ्ज्ञा उपलक्षणनामेदमनित्यसम इति। सूत्रमप्युपलक्षणपरम् यथा साधर्म्यात् तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसम इति। अत्र साधर्म्यग्रहणं वैधर्म्यस्याप्युपलक्षणम्। सर्वानित्यत्वप्रसङ्गादिति सर्वस्यापि साध्यधर्मवत्त्वप्रसङ्गादित्यर्थः। उपलक्षणाभिप्रायसूचनार्थं तुल्यधर्मोपपत्तेरिति सामान्येनोक्तम्। अन्यथा अनित्यत्वधर्मोपपत्तेरित्यवक्ष्यत् तदियमेवं प्रवर्तते यद्याकाशवैधर्म्यादनित्यः शब्दः त्रैलोक्यमपि तद्वैधर्म्यादनित्यं भवेत्। यथा

---

कारान्तरं सूत्रस्य कल्पयित्वेत्यर्थः ॥ २६ ॥

एपु यत्कल्पत्वादुद्देशक्रममतिलङ्घ्यानित्यसमजातिं तावल्लक्षयति। साधर्म्यादेरिति। साधर्म्यादेर्हेतोः वादिसाध्यसिद्धिश्चेत् तत एव सर्वस्यापि साध्यवत्त्वं स्यादिति प्रत्यवस्थानमनित्यसम इति सूत्रार्थः। तद्वैधर्म्यात् शब्दगु-

यदि महानससाधर्म्यादग्निमान् पर्वतः तर्हि तत्साधर्म्यात् त्रैलोक्यमप्यग्निमद्भवेदित्यादि । अविशेषसमायां तु पक्षादेरविशेषमात्रोपपादनम् इह तु विपक्षस्य सपक्षत्वापादने तात्पर्यमिति न तया सह संकरः । परिकरस्तु तद्वदेव बोद्धव्यः । उद्धारस्तु नेदं विवक्षितार्थसाधकम् असाधकसाधर्म्यात् अस्ति च तदस्य घटधर्मत्वमिति वा तस्यामेव प्रतिज्ञायां समानधर्मत्वात् सत्त्ववदिति वा तयोरेव पक्षदृष्टान्तयोर्घटधर्मत्वादिति वा जातिवाक्यार्थः । सर्वत्र स्वोक्तिव्यापनाद् व्याघातः । प्रथमे तावदिदमपि वाक्यं विवक्षितमर्थं न प्रतिपादयेत् तदप्रतिपादकसाधर्म्यात् । अस्ति च तदस्य प्रतिज्ञाद्यवयवयोगित्वं स्थापनावाक्येनेति व्याघातः । द्वितीये ऽपि तस्यामेव प्रतिज्ञायां समानधर्मत्वात् स्थापनावाक्यवदिति । तृतीये नेदं प्रतिषेधकम् आकाशधर्मत्वात् स्थापनावाक्यवदिति व्याघातः । तदेतत् सर्वं मनसि कृत्य साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्या-

णरहितत्वात् तत्साधर्म्यात्(?)। परिकरस्त्विति। कस्यचिद्धर्मस्य किञ्चित् प्रत्यसाधकत्वमस्या उत्थानबीजं हेतोरसाधकत्वमारोप्यमित्यर्थः । असाधकसाधर्म्यात् अनित्यत्वसाधकेन घटत्वादिना घटधर्मरूपत्वरूपसाधर्म्ययुक्तत्वादित्यर्थः । स्थापनावाक्येन असाधकत्वेनाभिमतवादिवाक्येन । असिद्धेः साध्यसिद्ध्यनङ्गस्य घटत्वादेः साधर्म्यात् घटधर्मत्वादेर्हेतोः वादिवाक्यप्रतिषेधो न सिद्ध्यति प्रति-

दिति । अपरं च व्याप्तिलक्षणमुक्ताङ्गहानिप्रदर्शनपरं सूत्रम् दृष्टान्ते साध्यसाधनभावेन प्रतिज्ञातस्य धर्मस्य हेतुत्वात् तस्य उभयथा भावान्नाविशेष इति ॥ २७ ॥

**धर्मस्य तदतद्रूपविकल्पानुपपत्तितः ।**
**धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेत् ॥ २८ ॥**

विवक्षितस्य कस्यचिद्विशेषणधर्मस्य तद्रूपत्वमतद्रूपत्वं वेति विकल्प्योभयथाप्यनुपपत्त्यभिधानेन धर्मिणस्तद्विशिष्टत्वखण्डनं नित्यसमः उपलक्षणानैतत् अन्वर्थसञ्ज्ञा तूपरञ्जकसमेति । ततश्च नित्यानित्यभिन्नाभिन्नकार्याकार्याश्रितानाश्रितसत्यासत्यसदसत्स्थिरास्थिरैकानेकानुवृत्तानुवृत्तविशेषणाविशेषणसापेक्षानपेक्षक्रमाक्रमवाच्यावाच्यपरोक्षापरोक्षवर्तमानावर्तमानहेयाहेयसहितासहितविरुद्धाविरुद्धज्ञाताज्ञातेष्टानिष्टद्विष्टाद्विष्टकृताकृतशक्ताशक्तो-

पेक्ष्येन धादिवाक्येन जातिवादिवाक्यस्य प्रतिज्ञाद्यवयवयोगित्वसाधर्म्यसद्भावेन स्वव्याघातकत्वादिति सूत्रार्थः । दृष्टान्ते साध्येन व्याप्तत्वेन भूयोदृष्टस्य कृतकत्वादिधर्मस्य हेतुत्वात् तथाविधहेतोः जातिवाक्ये ऽभावान्नोभयोः साम्यमतो जातिवाक्यं व्याप्त्याख्ययुक्ताङ्गहीनमिति सूत्रान्तरार्थः ॥ २७ ॥

उपरञ्जकधर्मः संसर्गिधर्मः विषयविषयिधर्मः अनुपलब्धिसमायामुक्तः इह तु विषयसंसृष्टधर्मो इति विशेषो द्रष्टव्यः ततश्च नित्यसम इत्युपलक्षणनामत्वात् । न पश्चाद-

त्पन्नानुत्पन्नव्यवहृताव्यवहृतघटाघटसन्दिग्धासन्दिग्धेत्याद्यपीतरविकल्पोपक्रमाः संगृहीता भवन्ति। एवमियं प्रवर्तते अनित्यः शब्द इति प्रतिज्ञायां तावदाह। अत्र साध्यमनित्यत्वम् अनित्यं नित्यं वा। तत्र अनित्यत्वे कदाचित् तदभावाच्छब्दो नित्यः स्यादिति न पक्षादनित्यत्वावकाशः। अथ नित्यं चेदनित्यत्वधर्मस्य नित्यत्वात् तद्धर्मिणोऽपि शब्दस्य नित्यता स्यादनाश्रयधर्मावस्थानासम्भवात्। तदिदमुक्तं नित्यमनित्यभावादनित्यस्योपपत्तेर्नित्यसम इति। अनित्यतया साध्ये शब्दे नित्यमनित्यत्वस्य भावाच्छब्दनित्यत्वोपपत्त्यभिधानेन प्रत्यवस्थानं नित्यसम इत्यर्थः। किं चेदमनित्यत्वं नित्यं चेत् तर्हि नित्यो धर्मः कथं धर्मिणमनित्यं कुर्यात्। न हि रक्तजपाकुसुमयोगात् स्फटिको नीलः स्यात्। अनित्येन नित्यत्वेन योगादनित्यः शब्दः स्यादिति चेत् तर्हि रक्तजपाकुसुमसंसर्गनिबन्धनस्फटिकारुणिमवद्भ्रातत्वप्रसङ्गः। तदाकारवस्तु सम्बन्धात् तदाकारत्वे घटाकारद्रव्यसम्बन्धात् पटस्यापि घटत्वप्रसङ्गश्च स्यात्। अपि च अनित्यमनित्यत्वान्तरयोगादनित्यं स्वभावतो वा पूर्वत्रान-

---

वित्यत्वावकाशः धर्मिग्राहकप्रमाणबाधितत्वादनित्यत्वसाधनमयुक्तमित्यभिप्रायः। अस्यां प्रकारान्तरेण प्रत्यव-

वास्या उत्तरत्रातत्स्वभावानां घटादीनामनित्यता न स्यात् । तेषां चानित्यत्वस्वभावत्वे द्रव्यत्वव्याघात इत्यादिः सरूपेण प्रवृत्तिः । विरूपेण तु नित्यः शब्द इति प्रतिज्ञायां नित्यत्वयोगान्नित्यः । तच्च धर्मिणो भिन्नमभिन्नं वा भिन्नं चेत् भिन्नत्वयोगात् तदपि भिन्नत्वान्तरयोगादित्यनवस्थापातः । नित्यत्वधर्मस्य धर्मिणः शब्दादभिन्नत्वे धर्मधर्मिणोरन्यतर एवावशिष्यते तत्र धर्ममात्रस्थितावाश्रयासिद्धिः । धर्मिमात्रस्थितौ साध्याभावेन कालातीतप्रसङ्गः । तथा अनित्यः शब्द इत्युक्ते अनित्यत्वं कार्यमकार्यं वा । कार्यमपि शब्देन सहोत्पद्यते ततः पूर्वं पश्चाद्वा । न प्रथमः कल्पः धर्मिणः समवायिकारणत्वेन पूर्वं भावावश्यम्भावात् । अत एव न द्वितीयः न च तृतीयः अनित्यत्वधर्मोत्पत्तेः

---

स्थानमाह । किञ्चेदमिति । अतत्स्वभावानां स्वभावतो नित्यानित्यत्वधर्मविलक्षणानां द्रव्यत्वव्याघातः अनित्यत्वं नाम नित्यत्वाभावः ततस्तत्स्वभायानां भावरूपद्रव्यत्वं व्याहतमित्यर्थः । सरूपेण वृत्तिः अनित्यत्वादिसाध्यधर्मसजातीयपरम्परया मत्यवस्थानप्रकार एवमुक्त इत्यर्थः । विरूपेण साध्यधर्मविजातीयभिन्नत्वादिपरम्परया मत्यवस्थानरीतिः वक्ष्यत इति शेषः । भिन्नत्वयोगात् भेदधर्मसंसर्गाद् भिन्नः स्यात् । तदपीति । तदपि भिन्नत्वं स्वधर्मेणानित्यात् भिन्नाश्च तस्यैतद्योगात् भिन्नत्वान्तरेण भिन्नं भवेदेवं तदप्यनवस्थापात इत्यर्थः । धर्ममात्रस्थितौ धर्मपरिशेषे । अत एवेति । धर्मिणः पूर्वसि-

पूर्वं शब्दो नित्यः स्यात् । तथा च नानित्यत्वावकाशः अनित्यत्वस्याकार्यत्वे तु धर्मिणोऽप्यकार्यत्वान्नित्यत्वापातः । तथा घट इत्युक्ते घटत्वयोगाद् घटः तत्किं नित्यमनित्यं वा नित्यत्वे घटोऽपि नित्यः स्यात् । नित्यधर्माश्रयत्वात् नित्यपरममहत्त्वाश्रयव्योमवत् । अनित्यत्वे सामान्यरूपताव्याघात इत्यादिसूत्रतात्पर्यार्थः । अस्या धर्मधर्मिभावो द्वारं प्रतिकूलतर्क आरोप्यः । उद्धारसूत्रं तु । प्रतिषेध्यनित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेः प्रतिषेधाभाव इति । अनित्य. शब्दो न भवति नित्यभूतानित्यत्वधर्माश्रयत्वात् । नित्यपरममहत्त्वाश्रयव्योमवदिति जात्युत्तरार्थः । तत्रानित्यतया प्रतिषेध्ये शब्दे नित्यमनित्यभावादिति हेतुः सिद्धश्चेत् तदा नित्यमनित्यत्वस्य स्वीकारादनित्ये नित्यत्वप्रसङ्गाभिधानेन कृतस्य प्रतिषेधस्याभावः । हेत्वङ्गीकारे प्रतिज्ञाव्याघातात् प्रतिज्ञाङ्गीकारे हेतुव्याघातादिति सूत्रोत्तरार्थः । यथायोगं व्याघातमात्रोपलक्षणं तात्पर्यार्थः । तथाहि यदुक्तम् ।

---

ऽवश्यम्भावादेव सहोत्पत्तिरयुक्त इत्यर्थः । तत्स्वरूपविरूपप्रवृत्तिप्रकाराणां सूत्रे ऽवकाश इत्याह । सूत्रतात्पर्यार्थ इति । प्रतिकूलतर्कशब्देन तद्वारकाश्रयासिद्धिप्रमाणबाधश्च गृह्यते । यथायोगमिति । एवं नित्यत्वाद्युपरञ्जकधर्मेषु साध्यमानेष्वपि प्रतिज्ञाहेत्वोरन्योन्यव्याघातमात्रं सूत्रतात्पर्यार्थं इत्यर्थः । तदेवोपपादयति ।

अतदाकारो वा धर्मो न धर्मिणस्तदाकारतामापादयतीति । तन्न धर्म एव हि धर्मिण आकारः न तु तेनापाद्यमर्थान्तरमस्ति ततश्चायुक्ताङ्गत्वं तदाकारापादकत्वस्यायुक्तस्याङ्गीकारात् । कथं धर्मिणो भिन्न आकारः स्यादिति चेत् न भिन्नस्यैवाकारत्वात् । न चातिप्रसङ्गः स्वभावतो व्यवस्थानात् । काल्पनिकं धर्मधर्मिभावमभ्युपगच्छतापि काल्पनिकस्यापि भेदस्यावश्याभ्युपगमनीयत्वात् । न हि स्वयमेव स्वस्य धर्मो भवति आत्माश्रयत्वप्रसङ्गात् स्वव्याघातश्च । इदमसाधकमित्यत्रासाधकत्वयोगादसाधकं तत्किं तदाकारमतदाकारं वा भिन्नमभिन्नं वा कार्यमकार्यं वेत्यादिविकल्पप्रवृत्तेर्दुर्वारत्वात् । एवं हेतुदृष्टान्त-

---

तथाहीत्यादिना । अतदाकार इति । अनित्यत्वादिधर्मरहितस्तद्भिना अनित्यत्वादिधर्मो न धर्मिणमनित्यत्वादियुक्तं करोतीति तदुक्तं पूर्वमित्यर्थः । कथं धर्मिण इति स्वरूपशब्दपर्यायः ततो न विरोध इत्यर्थः(!) । भिन्नस्याकारत्वे सर्वस्य सर्व एवाकारः स्यादित्यत्राह । न चातिप्रसङ्ग इति । स्वभावत इति । शरीरिणो भिन्नस्य शरीरत्वे ऽपि यथा घटपटादीनां शरीरत्वाभावः एवं भिन्नेषु कश्चिदेवाकारो न तु सर्व इति भावः । काल्पनिकमिति । धर्मधर्मिणोः भेदानवस्थानादभेदे धर्मधर्मिभावाभावान्न वास्तवः कश्चिद्धर्मधर्मिभावोऽस्ति किं तु काल्पनिक इति वदता बौद्धादिनेत्यर्थः । भेदानभ्युपगमे बौद्धमाह । न हि स्वयमेवेति । आत्माश्रयत्वप्रसङ्गात् आत्माश्रयं स्वमाश्रित्य स्वस्याव-

योरपि योज्यम् । एवमन्य आकारो न भवत्यन्यत्वा-
दित्यादावपि दर्शयितव्यम् । अत्र सर्वत्र धर्मधर्मिभा-
वानभ्युपगमे तवापि न हेतुसाध्ये स्याताम् । तदभ्यु-
पगमे वा न प्रतिषेध इति सर्वत्रापि व्याप्तिहान्या
युक्ताङ्गहानिश्च दर्शयितव्या । उपलब्धियोगादुपल-
ब्धस्तत्रापि तथेति युक्तियोगाद्युक्तस्तत्रापि तथेति
कृतियोगात् कार्यं तत्रापि तथेत्यादाविष्टप्रसङ्गत्वम-

---

न्यानप्रसङ्गात् । एवं हेतुदृष्टान्तयोरपीति । इदमसाधकम-
सिद्धत्वात् शब्दानित्यत्वे चाक्षुषत्ववत् इत्यत्रासिद्धियो-
गादसिद्धत्वं सा च तदाकारवृत्त्यादिकं चक्षुःसम्बन्धाच्चा-
क्षुषत्वं स च सम्बन्धस्तदाकारोऽतदाकारो वेत्यादिकं चोह-
नीयमित्यर्थः । अन्य आकार इति । अन्यत्वादिकं शब्दा-
देराकारो न भवितुमर्हति तदन्यत्वात् घटस्य पटवदित्या-
द्यनुमानेऽपि प्रतिज्ञाहेतुदृष्टान्तेषु पूर्वोक्तरीत्या व्याघातो
दर्शयितव्य इत्यर्थः । पुनरप्यसाधारणदोषमाह । अत्र सर्व-
त्रेति । सर्वत्र जातिवादिनाऽतदाकारस्तदाकारो वेत्या-
दिसर्वानुमानेषु न हेतुसाध्ये स्यातां हेतुसाध्ययोरपि
धर्मिणो धर्मत्वाद्धर्मधर्मिभावानभ्युपगमे तेऽपि न स्त
इत्यर्थः । तदभ्युपगमे वेति । अनुमानसिद्ध्यर्थं धर्मधर्मि-
भावाभ्युपगमे वाऽतदाकारस्तदाकारो वेत्यादिना वादि-
वाक्यप्रतिषेधो न सिद्ध्यतीत्यर्थः । व्याप्तिहान्या जाति-
वादिना तत्रतत्रोक्तप्रतिकूलतर्काणां दूषणव्याप्त्यभावेने-
त्यर्थः । केषुचिदुपरञ्जकधर्मेषु तर्कस्याङ्गान्तरहानिमाह ।
उपलब्धियोगादिति । इष्टप्रसङ्गत्वम् उपलब्धिकृतीनामुप-
लब्धत्वोक्तस्वकार्यत्वसहभावात् तत्प्रयोगोऽस्मदिष्ट इत्य-

प्यस्तीति सर्वेषामपि प्रसङ्गानां यथायथं तर्काङ्गपञ्च-
कान्यतमहानिरूहनीया । एतामेव जातिमवष्टभ्य
शुष्कतर्कवादिनां बौद्धचार्वाकवेदान्तिनां बालजनस-
म्मोहनहेतवः कण्ठकोलाहला इति संक्षेपः ॥ २८ ॥

**असिद्धतां वादिहेतोरुक्तान्तं साधयेत् स्वयम् ।**
**तद्दूषणान्मूलहेतुभङ्गः कार्यसमो मतः ॥ २९ ॥**

हेतुशब्दोत्र साधनाङ्गोपलक्षणार्थः तेन पक्ष-
हेतुदृष्टान्तानामन्यतमस्य साधनाङ्गस्यासिद्धत्वमुद्भा-
व्य तत्साधकत्वेन स्वयमेवोत्प्रेक्षया किञ्चिदभिधाय
स्वोत्प्रेक्षितदूषणेन वादिसाधनभङ्गापादनं कार्यस-
मः । अनित्यः शब्दः कार्यत्वादित्युक्ते प्रत्यवतिष्ठते ।
असिद्धं तावत् कार्यत्वं तत्साधकं च प्रयत्नानन्तरी-
यकत्वं तच्चाभिव्यक्तौ कूपोदकादिभिरनैकान्तिकम् ।
ततश्च कार्यत्वासिद्धिस्तदवस्थैवेति । एवं पक्षदृष्टा-

र्थः । सर्वेषामपीति । नित्यानित्यत्वादिसर्वोपरञ्जकधर्म-
मुद्दिश्य ये प्रसङ्गाख्यास्तर्का उक्ताः तेषु केचिद्व्याघाताः
केचित् प्रतितर्कपराहताः केचिदिष्टार्थाय पर्यवसानहीनाः
केचिदिष्टरूपाः केचिदनुकूलाः अतः सर्वे तर्काभासा इत्यू-
हनीयमित्यर्थः । बालजनसम्मोहना न्यायतत्त्वानभिज्ञ-
बालजनभ्रामिका ॥ २८ ॥

तत्साधकं चेति । शब्दः कार्यो भवितुमर्हति प्रयत्नान-
न्तरभावित्वात् घटवत् प्रमाणात् कार्यत्वहेतुसिद्धिरित्य-
र्थः । एवं पक्षदृष्टान्तयोरपीति । शब्दघटयोरनित्यत्वं नाम
प्रध्वंसनं तयोः सम्बन्धो विद्यमानकालेऽपि नष्टकाले वा ।

न्तयोरपि दर्शयितव्यम् । कथं तर्हि प्रयत्नकार्यानेकत्वात् कार्यसम इतिसूत्रसङ्घटना । किमत्र दुर्घटं प्रयत्नस्य कार्यो विषयः हेयोपादेयतया व्यवहर्तव्य इति यावत् । तस्यानेकत्वं पारमार्थिकापारमार्थिकत्वम् । तस्मात् प्रत्यवस्थानमिति । यद्वा प्रयत्नविषयस्यानेकत्वं जन्यत्वाभिव्यङ्ग्यत्वाभ्यां नानात्वम् । तस्मादनैकान्तिकत्वेन प्रत्यवस्थानमित्युदाहरणविशेषपरं योजनीयम् । बौद्धास्तु

साध्येनानुगमात् कार्यसामान्येनापि साधने ।
सम्बन्धिभेदाद्भेदोक्तिदोषः कार्यसमो मतः ॥

---

आद्ये व्याघातः द्वितीये परस्पराश्रयत्वम् अतः पक्षदृष्टान्तासिद्धौ तत्साधकं च शब्दघटौ प्रध्वंससम्बन्धयोग्यौ पूर्वत्रिकान्तभूतत्वात् व्यतिरेके च सामान्यवदित्याद्यनुमानम् तच्चात्मादावनैकान्तिकम् अतस्तयोरसिद्धिस्तदवस्थैवेत्यादिकं द्रष्टव्यमित्यर्थः । उक्तार्थस्य सौत्रत्वं नास्तीति शङ्कते । कथं तर्हीति । प्रथमं सकलानुमानव्यापकं सूत्रार्थमाह । प्रयत्नस्य कार्यो विषय इति । हानोपादानव्यवहाररूपानुमानवाक्यगोचरस्य लिङ्गादेः सिद्धत्वासिद्धत्ववतः प्रत्यवस्थानं कार्यसम इति सूत्रस्याहत्यार्थः । शब्दानित्यत्वानुमानपरमर्थान्तरमाह । यद्वेति । साध्येनानित्यत्वेनाव्याप्तत्वात् कार्यत्वहेतुना शब्दस्यानित्यत्वसाधने कृते सपक्षे साध्येन व्याप्तो हेतुः पक्षे नास्तीति पक्षे वर्तमानो हेतुर्नास्त्यतोऽसिद्धोऽसाधारणो वा स्यात् ॥

इति लक्षयन्ति । उदाहरन्ति च अनित्यः शब्दः कार्यत्वाद् घटवदित्युक्ते घटस्य कार्यत्वमन्यन्मृद्दण्डादिपूर्वकं शब्दस्य चान्यत्ताल्वादिव्यापारपूर्वकमिति कार्यत्वस्य भेद इति । अत्र हेतोः स्वरूपविशेषमात्रोपन्यासानुपन्यासपर्यवसाने वर्ण्यावर्ण्ययोरन्यतरः स्यात् । यदि दृष्टान्तदृष्टमृद्दण्डादिपूर्वकत्वनिवृत्तेः पक्षे कार्यत्वनिवृत्तिरिति पर्यवस्येत् तदापकर्षसमः । अथ पक्षे ऽपि मृद्दण्डादिपूर्वकत्वमुत्कृष्येत तदोत्कर्षसमः स्यादिति न किञ्चिदेतत् । अत्र भाष्यवार्त्तिकटीकासु सङ्कुलानि वचांसि प्रबोधसिद्धावाचार्यैरस्मदुक्त एवार्थे सङ्कलितानीति न सङ्कटं किञ्चित् । अस्य चानैकान्तिकत्वादिदुष्टसाधानोत्प्रेक्षाकारणं मौलस्याङ्गस्यासिद्धिरारोप्या उदाहरणविशेषे दुष्टत्वमूलप्रदर्शनार्थं सूत्रम् । कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेरिति । अत्र प्रयत्नशब्देन परम्परया तत्कार्यस्ताल्वादिव्यापारो लक्ष्यते । उत्प-

---

दृष्टान्तहेतुगतविशेषसद्भावासद्भावयोः पक्षोप्यसाध्यं स्यादित्येतावन्मात्रपर्यवसान इत्यर्थः । न किञ्चिदेतत् यौक्तोक्तं कार्यसमलक्षणमिति स्फुटबहुदोषवत्त्वान्न पक्षादिसममित्यर्थः । अत्र कार्यसमलक्षणे । अनैकान्तिकत्वादित्यादिशब्देनासिद्धिः गृह्यते । उदाहरणविशेषे कृतकत्वानुमानमुद्दिश्य प्रवृत्ते जात्युत्तरे । परम्परया आत्मप्रयत्नेन शरीरवायुचेष्टा तया । ताल्वादिव्यापार इति ।

णोरन्यस्मिन्नभिव्यक्तिलक्षणे कार्ये प्रयत्नो हेतुर्न भवति । कुतः सत एव शब्दस्यानुपलब्धिकारणोपपत्तेर्हि तथा स्यात् । न चास्यानुपलब्धिकारणं किञ्चिदस्ति आवरणाद्यसम्भवस्योक्तत्वादिति भावः । ततश्च कार्यः शब्दः अनभिव्यञ्जकप्रयत्नानन्तरोपलब्धेरिति हेत्वसिद्धिपरिहारः सूत्राक्षरार्थः । निर्विशेषणस्य प्रयत्नानन्तरीयकत्वादिति हेतोर्व्यभिचारः । सविशेषणस्य न दोषमावहतीत्यविषयवृत्तित्वमुक्तमेव । दूषणस्य विषयो नानुक्त इत्यविषयवृत्तित्वं चार्थतो दर्शितमिति ॥ २९ ॥

जातेः सप्ताङ्गानि दर्शयति ।

**लक्ष्यं लक्षणमुत्थानं पातनावसरौ फलम् ।**

**मूलमित्यङ्गमेतासाम् ।**

तानि तर्हि प्रतिजाति व्याक्रियन्तामिति चेत् तत्राह ॥

**तत्रोक्ते लक्ष्यलक्षणे ॥ ३० ॥**

---

हेतुतया । आवरणादीत्यादिशब्देनायोग्यत्वमसंस्कार्यत्वं च गृह्यते । न दोषमावहतीत्यविषयवृत्तित्वमिति । अत्रान्यथा स्वव्याघातप्रसङ्ग इति वाक्यमध्याहार्यम् । तात्पर्यतोऽस्य विषयवृत्तित्वमाह । उक्तमेवेति ॥ २९ ॥

जातेः सप्ताङ्गानीति । एवं चतुर्विंशतिजातिरुक्त्वा इदानीं सकलजातिसाधारणानि सप्ताङ्गान्युद्दिशति मूलप्रकार इत्यर्थः ॥ ३० ॥

प्रमादः प्रतिभाहानिरासामवसरः स्मृतः ।
सुलभं परिशिष्टे ऽन्यद् वयं विस्तरभीरवः ॥ ३१ ॥

तत्र समाङ्गेषु लक्ष्यं लक्षणं चोक्तमेव । सर्वासामप्यवसरः प्रमादः प्रतिभाहानिर्वा सभासङ्क्षोभादिना पर्याकुलितचेतस्तया सदसद्विवेकानवधारणनिबन्धनमसदुत्तरं प्रयुज्यते सदुत्तरप्रतिभाहानिश्च जातिप्रयोगावसरः । मूकीभावादसदुत्तरप्रयोगोपि वरं पाक्षिकसाम्यसम्भवादिति बुद्ध्या प्रवृत्तेः । अन्यदुत्थानबीजं कुत्रचिद्धेत्वाभासे निपातनं प्रयोगफलं दोषमूलं चेति चतुष्टयं प्रबोधसिद्धिनामनि परिशिष्टे विस्तृतमिति तत्परिश्रमशालिभिर्भवितव्यम् । तत्र ह्येवमुक्तम् ।

लक्ष्यं लक्षणमुत्थितिस्त्ववतिपदं मूलं फलं पातनम्
जातीनां सविशेषमेतदखिलं प्रव्यक्तमुक्तं रहः ॥ इति ।

---

सभासंक्षोभादिनेत्यादिशब्देन वादिवाचालता सभापत्युन्मुखता च गृह्यते ॥

लक्ष्यं सामान्यविशेषजातिस्वरूपं लक्षणं तदसाधारणो धर्म उत्थितिः तत्तज्जातीनामुत्थानहेतुस्त्ववतिपदं जातिप्रयोगावसरः मूलं साधारणासाधारणदुष्टत्वं फलं जातिप्रयोजनं वादिनस्तदा भ्रान्तिरिति यावत् पातनं जात्युत्तरेण वादिसाधने आपाद्यमसिद्धत्वादिदूषणं सविशेषं जात्यवान्तरभेदसहितं रहः सूत्रभाष्यादिषु साकल्येनानभिव्यक्तत्वादतिगूढम् ।

वयं तु संग्रहाधिकारिणो विस्तराद्भीत्या न व्याकृतवन्त इति ॥ ३१ ॥

जातिलक्षणे बुभुत्सातिशयोत्पादनार्थमाह ॥

कथासम्भोगवैदग्धीसम्पादनपटीयसी ।
ध्रियतां जातिमालेयं जातिमालेव पण्डितैः ॥३२॥

जल्पवितण्डयोः सदुत्तरापरिस्फूर्तौ स्वयं प्रयोगेण परप्रयुक्तोद्धारणेन च कथावैदग्ध्यहेतुत्वाज्जातयोऽवश्यमवधारणीया । अन्यथा सदुत्तराप्रतिभाने परप्रयोगे च मूकीभाव एव शरणं भवेदिति कथानिर्वाहाकौशलेन पाण्डित्याभिमानो भज्येतेति ॥ ३२ ॥

सदुत्तरेण जातीनामुद्धारे तत्त्वनिर्णयः ।
जयेतरव्यवस्थेति सिद्ध्येदेतत्फलद्वयम् ॥ ३३ ॥
षण्डसम्भोगतुल्याः स्युरन्यथा निष्फलाः कथाः ।
इति दर्शयितुं सूत्रैः षट्पक्षीमाह गोतमः ॥ ३४ ॥
असदुत्तररूपा सा द्रष्टव्या परिशिष्टतः ।

---

वयं मूलपद्यकाराः ॥ ३१ ॥

कथासम्भोगेति । विजिगीषुकथायाः सम्भोगप्रयोगस्तत्र । वैपदं विकुशलता तस्या उपार्जने असाधारणकारणमियं जातिसंहतिः विजिगीषुभिः विद्वद्भिर्लक्षणादिसहिता ज्ञातव्येत्यर्थः ।

वादकथायाश्च लाघवानवकाशाद्विशिनष्टि । जल्पवितण्डयोरिति । अन्यथा जातिलक्षणाद्यनवबोधे कथा न निर्वहति एवमसामर्थ्यम् ॥ ३२ ॥

परप्रयुक्ता जातीः सदुत्तरेणानुवृत्त्य स्वयमपि जात्यन्तरप्रयोगेन वादे तत्त्वनिर्णयलक्षणफलसिद्धिः। असत्साधनेन तदसम्भवात्। न च जल्पवितण्डयोर्जयपराजयव्यवस्था उभयोरपि निगृहीतत्वात्। ततश्च पण्हमैथुनवन्निष्प्रयोजनमेव कथात्रयमापद्येतेति दर्शयन् सूत्रकारः शिष्यशिक्षार्थं कथाभासरूपां षट्पक्षीमसूत्रयदिति। तत्र वादिनः प्रत्युत्तररूपं तृतीयं पक्षमाह। प्रतिषेधे ऽपि समानो दोष इति। प्रयत्नानन्तरीयकत्वं कार्यत्वसाधकं न भवति अनैकान्तिकत्वादिति प्रतिषेधे ऽपि तुल्यो दोषः। तत्रापि कार्यसमायाः सुवचत्वात्। प्रयत्नस्य व्यञ्जकत्वाङ्गीकारेण-

---

कथासन्ततिविच्छेदेन द्वितीयपद्यव्याख्यानप्रयोजनं प्रथमपदार्थमप्याह। परप्रयुक्ता इत्यादिना। तत्त्वनिर्णयः सवीतरागफलसिद्धिः। अनेन वादेऽपि प्रमादाच्छलादिप्राप्तिः सम्भावितेति दर्शितं भवति॥

षट्पक्षी वादिनः स्वसाध्यसाधनरूपः प्रथमः पक्षः प्रतिवादिनो जात्युत्तरप्रयोगाद् द्वितीयः पुनर्वादिनोः सत्प्रयोगः तृतीयः पुनरपि प्रतिवादिनोसत्प्रयोगश्चतुर्थः अथ वादिनो मिथ्याप्रयोगः पञ्चमः पश्चात् प्रतिवादिनोसङ्गतोक्तिः षष्ठः। एतेषां षण्णां पक्षाणां समाहारः षट्पक्षी तामाह सूत्रकार इत्यर्थः। प्रत्युत्तररूपं वादिवाक्यस्य प्रतिवचनं जात्युत्तरं तस्य प्रवचनं प्रत्युत्तरं तद्रूपमिति भावः। प्रयत्नानन्तरीयकत्वं सिद्धस्य वादिसाधनस्य साधकत्वेन सोत्प्रेक्षितः। प्रतिषेधे ऽपि जात्युत्तरे ऽपि। तुल्यत्वमेवाह। त-

नैकान्तिकत्वमुच्यते। तस्य व्यञ्जकत्वमसिद्धम्। तत्साधकस्य प्रयत्नानन्तरोपलब्धेरिति हेतोर्घटादिकार्यैरनैकान्तिकत्वादिति कार्यसमः। अथवा अनैकान्तिकत्वादिति प्रतिषेधहेतावपि समानोऽनैकान्तिकत्वदोषः। न ह्ययमेकान्ततः प्रतिषेधक एव स्वसत्ताया अप्रतिषेधकत्वादिति वाक्छलप्रयोगादिति। यद्वा दोषवत्त्वमात्रेण साम्यमुक्त्वा यं कश्चिद्दोषमाह। अत्र प्रथमतृतीययोर्मतानुज्ञा स्वदोषानुद्धरणेन परदोषापादनात्। द्वितीये तु निरनुयोज्यानुयोग इति। किमस्यामेव जातौ कथाभासप्रवृत्तिरित्याशंक्यमित्याह।

---

अपीति। एतदेवोपपादयति। प्रयत्नस्येति। शब्दनित्यत्ववादिना तस्य प्रयत्नव्यङ्ग्यत्वमङ्गीकृत्य मूलोदकादावनैकान्तिकत्वमुक्तम्। तस्य शब्दस्य प्रयत्नव्यङ्ग्यत्वमसिद्धम्। तत्साधकत्वं च शब्दः प्रयत्नव्यङ्ग्यः प्रयत्नानन्तरोपलब्धत्वात् मूलोदकादिवदिति। अयमपि हेतुः प्रयत्नजन्यैर्घटादिभिः अनैकान्तिकत्वादसाधकः ततः प्रयत्नव्यङ्ग्यत्वासिद्धिः शब्दस्य तदवस्थैवेति कार्यसम इत्याह इत्यर्थः। अथ सूत्रगतप्रतिषेधशब्दयोरर्थान्तरमाह अभिधावृत्तिवैपरीत्यात् प्रतिषेधहेतोरनैकान्तिकत्वम् न तु पूर्ववद्व्यभिचारादित्याह। न ह्ययमिति। अथ दोषशब्दस्य सम्मुखदोषमात्रवाचकत्वमित्याह। यद्वेति। अनिष्टापादनाज्जातिवादिनः स्वसाधनस्य साम्यत्वमनभिमतं तस्यैव वादिनोऽप्यनभिधानोऽप्यभिधावादिवदित्यर्थः। द्वितीये छलप्रयोग इति षट्पक्षाः

सर्वत्रैवमिति । सर्वास्वपि जातिषु कथाभासः प्रवर्तत इत्यर्थः । यथा क्षित्यादिकं सकर्तृकं कार्यत्वान्मूर्तत्वादिति । सदसत्प्रयोगे तद्वदाकाशसाधर्म्यात् शरीराजन्यत्वादकर्तृकं किं न स्यादिति साधर्म्यसमः । शरीराजन्यत्वं व्योमादौ परममहत्त्वेन सह दृष्टं क्षित्यादिनाप्यशरीरिकर्तृमता सता परममहता भवितव्यमित्युत्कर्षसमः । यद्याकाशदृष्टान्तेन परममहत्त्वं साध्यते तर्हि रूपदृष्टान्तेन तद्रहितत्वं किं न स्यादिति प्रतिदृष्टान्तसमः । शरीराजन्यत्वे ऽपि किञ्चिदमूर्तं दृष्टमाकाशादि किञ्चिच्च मूर्तं क्षित्यादीति । तथा किञ्चिदकर्तृकं भविष्यत्याकाशादि किञ्चिच्च सकर्तृकं क्षित्यादीति विकल्पसमः । तथा कार्यत्वं मूर्तत्वं वा साध्यमप्राप्य साधने ऽतिप्रसङ्गात् प्राप्य साधकमिति वक्तव्यम् । तदा किं कस्य साध्यं साधनं चेति प्राप्तिसम इति षट्पक्षाः । अथ प्रतिवादिनश्चतुर्थपक्षमाह । प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः । प्रतिषेधस्य द्वितीयपक्षस्य विप्रतिषेधस्तृतीयपक्षः । तत्रापि तुल्यो दोषः सैव जातिः वाक्छलेनानैकान्तिकत्वं वा दोष-

---

साधर्म्योत्कर्षप्रतिदृष्टान्तप्राप्तिसमा वादिसाधनसहिता एवं षट्पक्षा दर्शिताः । तथा वैधर्म्योत्कर्षसमायाश्च षट्पक्षाः द्रष्टव्या इति भावः । प्रतिषेधविपरीतः सैव जातिः

त्वमात्रेण वा पूर्ववत् तुल्यो भवतीति । वादिनः पञ्चमं पक्षमाह । प्रतिषेधदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानदोषप्रसङ्गो मतानुज्ञा । प्रतिषेधे द्वितीयपक्षे तृतीयपक्षस्थेन मयोक्तं दोषमनुद्धृत्य प्रतिषेधविप्रतिषेधे तृतीयपक्षे समानदोषप्रसङ्गो मतानुज्ञा नाम निग्रहस्थानं भवतीति । अथ प्रतिवादी द्वितीयपक्षस्थेन मया प्रथमपक्षे समुद्भावितदोषमनुद्धृत्य तृतीयपक्षस्थेन त्वया द्वितीयपक्षे क्रियमाणः समानदोषप्रसङ्गो मतानुज्ञा भवेदिति षष्ठं पक्षमाह । स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोष इति । अत्र स्वशब्देन वादी निर्दिश्यते । तस्य पक्षः स्थापना तं लक्षीकृत्य प्रवृत्तो द्वितीयः पक्षः स्वपक्षलक्षणः । तस्यापेक्षाभ्युपगमः । ततः परपक्षे ऽप्युपपत्त्युपसंहारे प्रतिषेधे ऽपि समानो दोष इति परापादितदोषोपसंहारे एवंत्वादिति हेतुनिर्देशे च क्रियमाणे समानो मतानुज्ञा दोष इति । किमर्थमिदं षट्पक्षीप्रदर्शनं त्रिपक्षादावप्युभयोरसदुत्तरप्रयोगे कथाभासो दर्शयितुं शक्यत एवेति चेत् । सत्यं तथापि षट्पक्षीं नातिवर्तते । ततः परं सभ्यैरेव वादिनौ निवार्य कुकथात्वप्रदर्शनमिति प्रदर्शयितुं तदिति मन्येथाः कुतः पुनः सभ्यास्तृतीया-

कार्यसमा । षट्पक्षे सूत्रतात्पर्यं पूर्वमेवाह । अथ प्रतिवादीति । पूर्वोक्त एवार्थे सूत्रं योजयति । अत्र स्वशब्देनेति ।

दिषु कुकथात्वमनुद्भावयन्तश्चतुर्थादिपक्षमनुमन्यन्ते। श्रूयतामवहितैः। सभ्यास्तावत्कथायां स्वयं कर्तृत्वेनानन्वयादुत्थाप्य विवक्षाः तदुत्थापनं च प्रश्नेन चोभयोरप्रतिभया वा कथाभासप्रबन्धेन वा भवति। पर्यनुयोज्योपेक्षणं च सभ्यैरुद्भाव्यम्। तच्च सत्साधनोपक्रमायां कथायां प्रथमद्वितीययोरसम्भावितमेव। तृतीये वादिनः सम्भावितमप्यनुद्भाव्य प्रतिवाद्यनुयोगमपेक्षमाणास्तूष्णीमासते। तत्र चतुर्थः पक्षः प्रवर्तते। तत्र सम्भावितस्यापि वाद्यनुयोगापेक्षयाऽनुद्भावने पञ्चमः पक्षः वादिनोः स्तम्भरूपमनुविधेयप्रश्नावसरमपेक्षमाणेषु षष्ठः। प्रश्नसमयातिक्रमे पुनरननुयुक्तावपि वादिनौ निवार्य कुकथात्वमावेदयन्ति। अन्यथावसरप्राप्तपर्यनुयोज्योपेक्षणानुद्भावने तेषामज्ञत्वप्रसङ्गात्। प्रतिवाद्यादिप्रश्ने त्रिपक्षादिषु पर्य-

---

त्रिपक्षादौ चतुःपञ्चपक्षाणामन्यतमे। तदितिषट्पक्षीप्रदर्शनमिति। येन केनचिदापादिता वक्तुमिच्छा येषां तदेतदुत्थाप्य विवक्षा निमित्तवशाद्दोषवादिन इत्यर्थः। तदुत्थापनं च विवक्षाजननं च वादिनः प्रतिवादिनोऽनुविधेयस्य वानुयोगेन पर्यनुयोज्योपेक्षणग्रहणान्निग्रहान्तराणि वादिभ्यामेव मुखत उद्भावनीयानीति दर्शयति। समयातिक्रमे प्रश्नत्रयस्यावसरे गच्छति सति कथाभासप्रबन्धे चानुवर्तमान इत्यर्थः। अन्यथा षट्पक्षानन्तरं वादिनौ निवार्य। प्रतिवादीति प्रतिवादिप्रश्ने त्रिपक्षः

वस्यति । वादे तु तृतीयकक्षायां वादिनोरनुयोज्यानुयोगमुद्भाव्य सदुत्तरेण कथा प्रवर्तनीया । तदनुद्भावने चतुर्थ्यां स्वदोषोद्भावनम् । पञ्चम्यामपि तथा । अप्रतिभाप्रतीत्यर्थं षष्ठस्यावकाशः । परस्परं स्वयं चानुद्भावनेन निरङ्कुशकथाप्रवृत्तौ सभ्यानामवसर इति सङ्क्षेपः ॥ ३३ ॥ ३४ ॥ ऽऽ ॥

इति श्रीवरदराजविरचिते तार्किकरक्षाव्याख्याने सारसंग्रहे द्वितीयः परिच्छेदः ॥

---

वादिप्रश्ने वा पञ्चत्रक्षिकया पर्यवस्यति तत ऊर्ध्वं न सानुवर्तत इत्यर्थः । निरनुयोज्यानुयोगं प्रतिवादिन इति शेषः । स्वदोषोद्भावनं प्रतिवादिना कर्तव्यमिति शेषः । पञ्चम्यामपि तथा । वादिना स्वदोषोद्भावनं कर्तव्यमित्यर्थः । परस्परं स्वयं चेत्यभिधानेन वीतरागत्वाद् वादे न जयपराजयप्रश्नावकाश इति गम्यते ॥ ३३ ॥ ३४ ॥ ऽऽ ॥

इति तार्किकरक्षायां ज्ञानपूर्णमुखोद्गता ।
चतुर्विंशतिजातीनां सम्पूर्णा लघुदीपिका ॥

# सटीकतार्किकरक्षायाम्

## तृतीयः परिच्छेदः ।

अथ निग्रहस्थानम् । तत्र सूत्रम् । अप्रतिपत्ति-र्विप्रतिपत्तिश्च निग्रहस्थानमिति । अत्र परोक्तस्वोक्तयोरज्ञानमप्रतिपत्तिः । तयोरेव विरुद्धा प्रतिपत्ति-र्विप्रतिपत्तिः । अन्यथाप्रतीतिरिति यावत् । तयोश्च प्रत्येकं समुच्चये चाव्यापकत्वात् क्वचिदप्रतिपत्तिः क्वचिद्विप्रतिपत्तिरिति व्यवस्थाश्रयणे ऽप्यनुगताकारा-भावेनालक्षणत्वादुभयानुगततत्त्वाप्रतिपत्तिस्ताभ्यां लक्ष्यते । सा च परबुद्धेरप्रत्यक्षत्वात् स्वरूपतो न निग्रहस्थानं भवतीति स्वज्ञापकं न लक्षयति । ततश्च तत्त्वाप्रतिपत्तिलिङ्गं निग्रहस्थानमित्युक्तं भवति ।

---

कृता जातिपरिच्छेदव्याख्या लघुतरा मया ।
क्रियते निग्रहस्थानपरिच्छेदस्य साधुना ॥

तयोश्चेति । अप्रतिपत्तिर्निग्रहस्थानलक्षणं चेद् विप्रतिपत्तिर्न स्यादेषा चेदितरा न स्यात् उभयं चेदेकैका न स्यात् विषयभेदेनोभयं चेदनुवृत्तलक्षणं नास्ति अत उभयगततत्त्वाप्रतिपत्तिस्ताभ्यां लक्ष्यते । सा चात्मगता पराप्रत्यक्षेति तया तज्ज्ञापकं लक्ष्यते ततो लक्षितलक्षणन्याये-

अत्र निग्रहस्थानप्रवृत्तिनिमित्तानुसारेण लक्षणमाह ।

**अखण्डिताहङ्कृतिना पराहङ्कारखण्डनम् ।**
**निग्रहस्तन्निमित्तस्य निग्रहस्थानतोच्यते ॥ १ ॥**

अत्र कथायामित्युपस्कर्तव्यम् । अन्यथातिप्रसङ्गात् । यथोक्तमाचार्यैः । कथायामखण्डिताहङ्कारेण परस्याहङ्कारखण्डनमिह पराजयो निग्रह इति । तानि च द्वाविंशतिः परिसंख्यानात् । तदुक्तम् । प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासः हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानीति । चशब्दस्त्वर्थः । तेन कथामध्ये भूतावेशापन्नानि झटितितिरोधानेन गलितोद्भावनावसरा-

---

न तत्त्वाप्रतिपत्तिलिङ्गं निग्रहस्थानमिति सामान्यलक्षणं सूत्रतात्पर्यार्थ इत्याहत्यार्थः । अत्र निग्रहस्थानेति । एवं सूत्रस्य दुर्घटत्वात् तदर्थं हृदि कृत्य प्रकारान्तरेण मूलग्रन्थकारः सामान्यलक्षणमाहेत्यर्थः ।

उपस्कर्तव्यमुत्तरपद्यगतमाकर्षणीयम् । अतिप्रसङ्गात् कथाव्यतिरेकेण परस्परं विवदमानानामनिपुणवचसां निग्रहस्थानप्रसङ्गादित्यर्थः । तानि तत्त्वाप्रतिपत्तिलिङ्गानि । परिसंख्यानात् सूत्रकारेण तावतामेव निग्रहस्थानत्वेनोक्तत्वात् । भूतावेशाभिभूतप्रलापापस्माराद्यावेशेनो-

णि पुरःस्फूर्तिकान्यनधिकृतोद्भावनानि च व्यवच्छि-न्त्ति। प्रतियोग्यपेक्षया तात्कालिकातत्त्वज्ञानलिङ्ग-स्य निग्रहस्थानत्वात् तेषां चानेवंविधत्वादिति ॥१॥

**कथायां यच्च पक्षादि येन निर्दिष्टमादितः।**
**तस्य तेन पुनस्त्यागः प्रतिज्ञाहानिरुच्यते ॥२॥**

वादिना प्रतिवादिना वा येन कथायां यत्प-क्षहेतुदृष्टान्तदूषणानामन्यतमं प्रथमं निर्दिष्टं तस्य दूषणसमुन्मेषेण तथा निर्वाहमपश्यता तेन पुनस्त्यागः प्रतिज्ञाहानिर्नाम निग्रहस्थानं भवति। त्यागश्च यदि दुष्टमेतत् तन्माभूदिति कण्ठतोऽर्थतश्च द्विधा भवति। पक्षे तावत् साध्यसाधनधर्मिणां तद्विशेषणानां च त्यागाः षड् भवन्ति। तत्राद्यो यथा। अनित्यः शब्दः ऐन्द्रियकत्वादित्युक्ते सामान्यमैन्द्रियकं नित्यं दृष्टमि-

---

कानि। झटितीति। केनचित् समोदं निग्रहं स्पष्टमुक्त्वा स्ववचनं स्वयमेव बुद्ध्या परिहृतत्वादुच्यमानो का उक्ता तस्योद्भावनकालतया स्पष्टा (?)। पुरः स्फूर्तिकेति। प्रति-वादिवचनात् पूर्वमेवातितिक्ष्णमति केनचित् पार्श्वस्थेनो-द्भावितानि। तेषां चेति। आद्ये त्वज्ञानलिङ्गत्वाभावात् द्वितीये तदवसानानर्हतया अज्ञानलिङ्गत्वाभावात् तृतीये ऽन्योक्तत्वेन प्रतिवादिनो विजयाभावाच्चेत्यर्थः ॥१॥

आद्यः साध्यत्यागात् द्वितीयः साधनत्यागात् तृतीयः धर्मित्यागात् मनसः परिग्रहे ऽपि पूर्वोक्तस्य विशिष्टस्य त्यागाद्धर्मिहानिरिति द्रष्टव्यम्। चतुर्थः साध्य-

त्यनैकान्तिकत्वेन प्रत्युक्ते तर्हि शब्दोऽपि नित्यः स्यादिति । द्वितीयस्तु तस्मिन्नेव हेतौ तथैव प्रत्युक्ते तर्हि कृतकत्वादस्त्विति । तृतीयस्तु अनित्ये वाङ्मनसे मूर्तत्वादित्युक्ते भागासिद्धा च प्रत्युक्ते तर्हि मन एवास्त्विति । चतुर्थस्तु क्षित्यादिकं बुद्धिमत्कर्तृपूर्वकमित्युक्ते उपादानादिगोचरज्ञानचिकीर्षाप्रयत्नवत एव कर्तृत्वाद्बुद्धिमदिति विशेषणवैयर्थ्ये ऽभिहिते तर्हि सकर्तृकमेवास्त्विति । पञ्चमस्तु अनित्यः शब्दः प्रयत्नकार्यत्वादित्युक्ते विशेषणवैयर्थ्योक्तौ तत्परित्यागः । षष्ठस्तु ऐन्द्रियकः शब्दो नित्यः कार्यत्वादित्युक्ते तथैव प्रत्युक्ते शब्द एवास्त्विति ॥

दृष्टान्ते ऽपि हानेः पूर्ववत् षट् प्रकाराः । आद्यो यथा । अनित्यः शब्दः ऐन्द्रियकत्वात् घटवदित्युक्ते सामान्येनानैकान्तिकत्वोद्भावने घटोऽपि तर्हि नित्योऽस्त्विति । द्वितीयस्तु तस्यामेव प्रतिज्ञायां प्रत्यक्षगुणत्वाद् द्व्यणुकरूपवदित्युक्ते साधनवैकल्योद्भावने कार्यत्वहेत्वाधारतया स एव दृष्टान्त

विशेषणत्यागः वैयर्थ्ये पुनरुक्तत्वेन दुष्टत्वे । पञ्चमः हेतुविशेषणत्यागः । विशेषणेति । प्रयत्नविशेषणस्य व्यावृत्त्यभावेन कृतकत्वोक्तौ । षष्ठः धर्मिविशेषणत्यागः । तथैव प्रत्युक्ते ऽपि सिद्धसाधनपरिहारार्थं हि धर्मिविशेषणमत्र त्वैन्द्रियकत्वं विशेषणम् ।

तदभावार्थमित्युक्ते सति दृष्टान्ते चाद्यद्वितीयादि-

इति। तृतीयस्तु तस्मिन्नेव दृष्टान्ते तथैव प्रत्युक्ते घटरूपं तर्हि भविष्यतीति। यथा च साधर्म्यदृष्टान्तत्वेन प्रत्युक्ते माभूदयं वैधर्म्यदृष्टान्तोऽस्त्विति। चतुर्थस्तु यत्कार्यं तद्बुद्धिमत्कर्तृपूर्वकं यथा घट इत्युदाहृते पूर्ववद्विशेषणवैयर्थ्योक्तौ तत्परित्यागः। पञ्चमस्तु यत्प्रयत्नकार्यं तदनित्यं यथा घट इत्युक्ते प्रयत्नविशेषणस्य वैयर्थ्योक्तौ त्यागः। षष्ठस्तु यथा स्थूलपदानर्थक्योद्भावने तस्य त्यागः॥

दूषणहानिस्तु स्वरूपतो विशेषणतश्च द्विधा तत्राद्यो यथा। अनित्यः शब्दः कृतकत्वादित्युक्ते अनैकान्तिकत्वोद्भावने निरनुयोज्यानुयोगत्वेन दूषिते स्वरूपासिद्धिस्तर्हीति। द्वितीयस्तु स्वरूपासिद्धिपरिहारे व्याप्यत्वासिद्धिस्तर्हीति॥

ननु यद्दर्शनेनायमुक्तं त्यजति स एव दोषो

---

शब्दानामित्यर्थः पूर्ववत्। यथा च साधर्म्येति। द्व्यणुकरूपान्वयदृष्टान्तत्वाभावे यदनित्यं न भवति तत्प्रत्यक्षमपि न भवति यथा द्व्यणुकरूपमिति। अयमेव व्यतिरेकदृष्टान्तः। यद्वा एवमपि दृष्टान्ते दूषिते तर्हि व्यतिरेकेणापि परमाणुरूपवदित्यर्थः।

निरनुयोज्यानुयोगत्वेन अविद्यमानदोषोद्भावनत्वेन। स्वरूपासिद्धिपरिहारे ऽनभिव्यञ्जकप्रयत्नानन्तरभावित्वेन हेतुना शब्दस्य कृतकत्वहेत्वसिद्धिपरिहारे ऽभिहिते सतीत्यर्थः॥

निग्रहस्थानमस्तु न हानिरिति चेत् । न सतस्त्यागे तावद्धानिरेव निग्रहस्थानम् असतस्त्यागे ऽपि त्यागेनैव पूर्वदोषस्य परिहृतत्वादियमेव निग्रहस्थानम् । इयं तु प्रत्युत्तरानुपातिनी तदुत्तरकद्योद्भाव्या । तत्रोपेक्षितानुद्भावयितुं निग्रहापादिका सतस्त्यागे तु प्रतिवादिनेऽसद्दोषोद्भावनेन निरनुयोज्यानुयोगापातात् तदनुद्भावनेनोक्तं त्यजतः पर्यनुयोज्योपेक्षणसहचारिणी हानिरवश्योद्भाव्या आत्मन एकनिग्रहापत्तेः परस्य रुद्धयापत्तेरवष्टम्भविजयावहत्वात् । वादे तु सद्धानिरुद्भाव्या नेतरा । अत्र निर्वाह्यमेव वदेदुक्तं च निर्वहेदिति रहस्यम् ॥ २ ॥

---

यद्दर्शनेन यस्यानैकान्तिकत्वभागासिद्ध्यादेर्दर्शनेन । सतस्त्यागे प्रामाणिकसाध्यसाधनादिपरित्यागे सति हानिरेव यथोक्तदोषस्याभासत्वात् तदधीननिग्रह इति भावः । असतः प्रमाणिकत्वाभाववतः । प्रत्युत्तरानुपातिनीति । प्रथमद्वितीयपक्षयोस्त्यागायोगात् तृतीयचतुर्थादिपक्षेषु सम्भाविता चतुर्थपञ्चमादिपक्षेपूद्भाव्या । तत्रोपेक्षिता प्रतिवाद्यादेः पर्यनुयोज्योपेक्षणप्रदेत्यर्थः । वादिनः अवश्योद्भाव्या प्रतिवादिनेति शेषः । स्वस्यापि निगृहीतत्वात् कथं परदोषोद्भावनमिति चेत् तत्राह । आत्मन इति । अवष्टम्भविजयो नाम न्यूनदोषवता परस्याधिकदोषोद्भावनम् ॥ २ ॥

एवं तर्ह्युक्तहानिरिति व्यपदेशः स्यात् तत्राह॥

**अत्र[१] प्रतिज्ञाग्रहणमुक्तमात्रोपलक्षणम् ।**

सत्यम् अन्वर्थसञ्ज्ञेयमेव । उपलक्षणमेव प्रतिज्ञाहानिरिति । कथं तर्हि सूत्रम् प्रतिदृष्टान्तधर्मानुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिरिति । इदं हि दृष्टान्ते साध्यधर्महानिः प्रतिज्ञाहानिरित्याह । यद्वा दृष्टश्चासौ अन्ते निगमने व्यवस्थित इति दृष्टान्तशब्देन पक्षमभिधाय स्वीयपक्षे प्रतिपक्षधर्मानुज्ञानरूपा साध्यधर्मा हानिः प्रतिज्ञाहानिरिति । सत्यम् तथापि लक्ष्यलक्षणपदानामुक्तमात्रोपलक्षणत्वान्न कश्चिद्दोष इति ।

एवं तर्हि धर्मिसाध्यहेतुदृष्टान्तानां दूषणतद्विशेषणानां हानिरियमिति सिद्धे सति ।

उक्तस्यार्थजातस्य सूत्रं नानुगुणमिति शङ्कते । कथं तर्हीति । पूर्वपक्षी स्वयमेव सूत्रार्थमाह । इदं हीति । घटोऽपि तर्हि नित्योऽस्त्वित्यकैवेयमिति सूत्रस्य वाचनिकोऽर्थः नान्या हानिरित्यर्थः । यद्वेति । सूत्रस्यार्थान्तरविवक्षायां शब्दोऽपि तर्हि नित्यः स्यादित्येकैवेयं नान्येत्युक्तं भवति । अतः सूत्रानुक्तः प्रपञ्च इति भावः । सत्यमित्यर्द्धाङ्गीकारसूचनम् । लक्ष्यलक्षणपदानां प्रतिज्ञाहानिप्रतिदृष्टान्तधर्मेषु दृष्टान्तशब्दानाम् । एवमियं प्रतिज्ञाहानिः पक्षदृष्टान्तदोषभेदाच्चतुर्दशविधा सा च माभूत् तर्हीत्यन्यथास्त्विति च प्रत्येकं द्विधा अतोऽष्टाविंशतिभेद इति द्रष्टव्यम् ॥

(१) तच-पा॰ A पु॰ ।

**अविशेषितपूर्वोक्ते साध्यांशे दूषिते पुनः ॥ ३ ॥**
**तद्विशेषणनिक्षेपः प्रतिज्ञान्तरमिष्यते[1] ।**

द्व्यंशो ह्यनुमानप्रयोगः । साध्यांशः साधनांशश्चेति । तत्र साध्यांशः प्रतिज्ञोदाहरणे प्रयोज्यभागो निगमनं चेति । शेषः साधनांशः । तत्र निर्विशेषणं प्रयुक्तस्य साध्यांशस्य दूषणोद्भावने परेण कृते सति तत्परिजिहीर्षया पुनर्विशेषणं प्रक्षिप्य पूर्वोक्तस्यैव निर्देशः प्रतिज्ञान्तरम् । तथा च सूत्रम् । प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थनिर्देशः प्रतिज्ञान्तरमिति । अविशिष्टस्य साध्यभागस्य प्रतिषेधे कृते धर्मविकल्पं प्रक्षिप्य तदर्थस्य तस्यैव पूर्वोक्तस्यार्थस्य तदर्थं साध्यसिद्ध्यर्थं वा निर्देशः प्रतिज्ञान्तरमित्यर्थः । तच्च पक्षतद्विशेषणसाध्यतद्विशेषणप्रक्षेपेण चतुर्विधम् यथा नित्या वर्णाः श्रावणत्वाच्छब्दत्ववदित्युक्ते ध्वनिभिरनै-

---

उदाहरणे प्रयोज्यभागः यत् कृतकं तदनित्यं दृष्टमित्यादौ तदनित्यं दृष्टमित्यादिः शेषः हेतुरुदाहरणे यत् कृतकमित्यादिः उपनयश्च निर्विशेषणं निरुपपदं प्रक्षिप्य उक्तदोषनिवारकमर्थान्तरमुक्त्वा धर्मविकल्पं प्रक्षिप्य धर्मो ध्वनिर्वर्णात्मकत्वादिः तस्य विकल्पः पक्षतद्विशेषणत्वादिरूपेण योजनं तयोस्त्वेत्यर्थः । अर्थान्तरमाह । तदर्थमिति । साध्यसिद्ध्यर्थमित्यत्र प्रतिषेधनिवृत्त्यर्थमिति द्रष्टव्यम् ।

---

(१) मुच्यते-पा· A पु· ।

कान्तिकत्वेन दूषिते सध्वनयो वर्णा नित्या इति पक्षान्तरप्रक्षेपः । तद्विशेषणप्रक्षेपस्तु अनित्यः शब्दः कार्यत्वादित्युक्ते ध्वनिभागे सिद्धसाध्योद्भावने वर्णात्मकः शब्द इति । अग्निमदिदं सुरभिमलिनधूमवत्त्वादित्युक्ते विशेषणासामर्थ्ये साधिते साग्निकृष्णागरुदारुमदिति साध्यान्तरप्रक्षेपः । विवादाध्यासितं बुद्धिमत्पूर्वकमित्युक्ते सिद्धसाध्यताभिधाने उपादानादिगोचरबुद्धिमत्पूर्वकमिति साध्यविशेषणप्रक्षेपः । उदाहरणे प्रयोज्यभागे यथा । यत् सुरभिमलिनधूमवत् तदग्निमदित्युक्ते प्रयोज्यांशे न्यूनतया प्रत्युक्ते तत् साग्निकृष्णागरुदारुमदिति । निगमने ऽपि प्रतिज्ञायामिवाविशिष्टप्रतिज्ञैकदेशोपसंहारे तथैव प्रत्युक्ते चतुर्विधो विशेषणप्रक्षेपः स्वयमेवोदाहरणीयः । न

---

ध्वनिभिः अनित्यत्वेनोभयसम्बन्धात् तीव्रत्वादिसामान्याभिव्यञ्जकैः । विशेषणासामार्थ्यम् सुरभिमलिनविशेषणयोर्व्यावर्त्याभावेन वैयर्थ्यम् । सिद्धसाध्यत्वाभिधाने भोक्तृत्वहेत्वदृष्टजन्यत्वेन परम्परया बुद्धिमात्रपूर्वकत्वात् सिद्धसाधनमित्युक्ते सति । उपादानादीत्यादिशब्देन उपकरणसम्प्रदानप्रयोजनानि गृह्यन्ते । दारुमदित्यादिशब्देन ईश्वरानुमानस्योदाहरणे प्रयोज्यभागे साध्ये विशेषणप्रक्षेपो गृह्यते । निगमने ऽपीति । तस्मान्नित्या वर्णाः तस्मादिदमग्निमत् तस्मादिदं बुद्धिमत्पूर्वकमित्येतेषु पूर्वदूषितेषु पूर्ववत् पक्षतद्विशेषणसाध्यतद्विशेषणप्रक्षेपेण विशेषणाभा-

चैवं हानिरेवाविशिष्टस्य परित्यागादिति वाच्यम् । पूर्वोक्तस्यापरित्यागात् त्यक्तस्य विशेषणाभावस्य प्रागनुक्तत्वादिति । अत्र कक्ष्यान्तरे न विशेषणीयमिति रहस्यम् ॥ ३ ॥ ८८ ॥

पदयोर्वाक्ययोर्वा य एकवक्तृकयोर्मिथः ॥ ४ ॥
व्याघातो निग्रहस्थानं स्यात् प्रतिज्ञाविरोधतः ।

एकवक्तृकयोः पदयोर्वाक्ययोर्वा यः परस्परव्याघातः स प्रतिज्ञाविरोधो नाम निग्रहस्थानं भवति । तदुक्तं प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोध इति ।

---

वोऽपि निरस्तः । एवमनुपन्यस्ते इत्युक्तहानिरत्र नास्तीति मतं (बहिर्भावेन प्रस्तुतसाध्यं शब्दानित्यत्वं प्रतीत एव व्याकरणादिमतानुसारेण। अत्र न्यूनादिति उदाहरणावयवान्तरवचनादयं हेतुः हेतुं स्वत्यादि वचनाच्च न्यूनपुनरुक्तादिसम्भेदे सत्यपि उक्तग्राह्यत्वात वादिवाक्योपरमानन्तरं ग्राह्यत्वात् उच्यमानग्राह्यत्वात् वादिवाक्योच्चारणसमयवेद्यत्वेन प्रथमप्रतिपन्नत्वादित्यर्थः) । (१)शेषमवशेषं हानिवदूह्यम् । कक्ष्यान्तरे तृतीयादिपक्षे । एवं प्रतिज्ञान्तरस्य दशविधो भेदः ॥ ३ ॥ ८८ ॥

एकवक्तृकयोरिति विशेषणस्य तात्पर्यं वक्ष्यति । अवान्तरवाक्ययोः प्रतिज्ञाहेत्वादिपञ्चसु मध्ये द्वयोर्द्वयोरुक्तयोरन्योन्यविरोध उक्तविरोध इति सूत्रतात्प-

---

(१) ( ) एतच्चिह्नितपाठो मूलासम्बद्धः ।

अत्र प्रतिज्ञाहेतुपदाभ्यां प्रतियोगिद्वयमुपलक्ष्यते । लक्ष्यगतेन च प्रतिज्ञापदेनोक्तमात्रं प्रतिज्ञाहेतुविरोध इति लक्ष्यनिर्देशे कर्तव्ये एकपदनिर्देशेन एकस्मिन्नप्यवयवे तदंशयोर्विरोधं सूचयति । स च प्रतिज्ञायां धर्मधर्मिनिषेधात् तयोरेव विधानाच्चतुर्विधः । तत्र प्रथमो यथा ईश्वरो न कर्तेति द्वितीयस्तु नास्तीश्वर इति । तृतीयस्तु ईश्वरः किञ्चिद्ज्ञ इति । चतुर्थस्तु अतीतमस्तीति । प्रतिज्ञाहेत्वोर्विरोधो यथा गुणव्यतिरिक्तं द्रव्यातिरिक्तत्वादिति । प्रतिज्ञादृष्टान्तयोर्यथा अनित्यः शब्दः प्रमेयत्वात् यत्प्रमेयं तदनित्यं यथा व्योमेति । प्रतिज्ञोपनययोस्तु हेतुविरोधाविरोधाभ्यामनवकाशः । प्रतिज्ञानिगमनयोस्तु यथा अनित्य इति प्रतिज्ञाय तस्मान्नित्य इति । हेतुदृष्टान्तयोर्यथा अनित्यः शब्द ऐन्द्रियकत्वात् द्व्यणुकादिवदिति ।

---

योर्थ इत्याह । अत्र प्रतिज्ञेति । सूत्रकारस्य सकलावान्तरवाक्यविरोधे तात्पर्यम् । भवतु पदयोर्विरोधः तत्रलब्ध इत्याशङ्क्याह । प्रतिज्ञाहेतुविरोध इतीति । तत्र प्रथमो यथेति । द्वितीयस्त्विति । ईश्वरसिद्धावसिद्धौ च निषेधो न युक्तः निषेधविरोध इत्यर्थः । तृतीयस्त्विति जगत उपादानगोचरबुद्धिमत्त्वेन सर्वज्ञस्यैवेश्वरत्वात् तस्य किञ्चिद्ज्ञत्वविधारणं विरुद्धमिति भावः । चतुर्थस्त्विति । गतकालस्यातीतत्वात् तस्य वर्तमानकालत्वं विरुद्धमित्यर्थः ।

हेतूपनययोर्यथा तत्रैवानैन्द्रियकश्च शब्द इति । एवं तर्क्ये दूषणवाक्ये ऽपि विरोधः स्वयमेवोहनीयः। न चायमपसिद्धान्तः एकवक्तृकवाक्यविपयत्वात् । न च विरुद्धहेत्वाभाससङ्करः । तत्र साध्यविपर्ययव्याप्तिनिदर्शनेन विरोधस्योद्भाव्यत्वात् । अत्र चास्ति नास्तीतिवदुक्तिमात्रेण विरोधस्फुरणादिति । एवंविधानां च दुरवलेपात् प्रमादाद्वोक्तिसंभवः । अयं च प्रथमकक्ष्यातिपाती तदुत्तरकक्ष्योद्भाव्यः । मिथो व्याहतं न वदेदिति तत्त्वम् ॥ ४ ॥ ऽऽ ॥

स्वयमुक्तापलापेन प्रतिज्ञान्यासनिग्रहः ॥ ५ ॥

स्वोक्तस्य स्वयमेवापलापः प्रतिज्ञासंन्यासः । तदुक्तम् पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः। अत्र पक्षशब्द उक्तमात्रपरः । तथा प्रतिज्ञातार्थशब्दश्च। अपनयनमपलापः। ततश्चोक्तप्रतिषेधे परेण कृते तत्परिजिहीर्षयोक्तापलाप उक्तसंन्यास इत्यर्थः। स च चतुर्विधः। केनेदमुक्तमिति वा परमतमेतन्मयोक्तमिति वा स्वयमेवोक्त्वा त्वयेदमुक्तमिति

---

तत्रैव अनन्तरप्रसूतशब्दानित्यत्वानुमाने । एवं तर्क्य इति। नित्यत्वे ऽविनाशित्वप्रसङ्गः। कृतकत्वहेतुर्यदि पक्षविपक्षयोरेव वर्तते तर्ह्यनैकान्तिकोऽयमित्यादिकमूहनीयमित्यर्थः । तदुत्तरकक्ष्योद्भाव्यः द्वितीयपक्षादावुद्भाव्यस्ततोऽपेक्षितो निग्रहाय भवतीति तात्पर्यम् । एवं प्रतिज्ञाविरोध एकादशविध इति द्रष्टव्यम् ॥ ४ ॥ ऽऽ ॥

वा परोक्तमेव मयानूदितमिति वा। न चेदमसंभवदुक्तिकम् दूषणोद्भावने ह्यस्फूर्तिदशायां त्यागवदपलापस्यापि संभवात्। न च कापालवादित्रादिनेवापलापेनापि पूर्वदोषो न परिहृतः। यतः स एव निग्रहस्थानं भवेत् वादे स्खलितसंगूहनाभावे ऽपि प्रमादात् कथञ्चित् संभवादुद्भाव्यम्। शेषमशेषं हानिवत्। प्राश्निकाद्यवगतं नापलपेदिति रहस्यम् ॥ ५ ॥

हेत्वन्तरं साधकांशे दूषिते तद्विशेषणम्।

अविशेषोक्तसाधकभागे दूषिते सति तद्दोषपरिजिहीर्षया पूर्वोक्तस्यैव पुनः केनापि विशेषणं हेत्वन्तरं नाम निग्रहस्थानं भवति। तदुक्तम् अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषणमिच्छतो हेत्वन्तरं नाम निग्रहस्थानमिति। अत्र हेतुपदेन साधकभागमुपलक्षयति। इच्छया च तत्कार्यं विशेषणवचनम्। न हि स्वस्थो ऽकस्मादुक्तं विशिनष्टीति प्रतिषेधपरिजिहीर्षा अस्य मूलमिति दर्शयितुमुक्तं प्रतिषिद्ध इति। एतच्च हेत्वा-

प्रतिज्ञाशब्दौ लक्ष्यलक्षणगतौ त्यागवत्। स एव पूर्वोक्तदोष एव। शेषमशेषमिति। पक्षहेतुदृष्टान्तदूषणानां दुष्टत्वे साध्यसाधनाद्यपलापरूपेणायमपि चतुर्दशविधो भवति तृतीयकक्षादावयं सम्भावितः उत्तरकक्षादौ तुल्योऽन्यथा निग्रहाय भवतीत्यादिकं प्रतिज्ञाहानिवदस्यापि द्रष्टव्यमित्यर्थः ॥ ५ ॥

केनापि विशेषणेन सहेति विशेषः। जात्युत्तरत्वेन

विशेषणभेदात् तच्चतुर्विधम् । तत्र हेतौ यथा अनित्यः शब्दः अस्मदादिबाह्येन्द्रियग्राह्यत्वादित्युक्ते सामान्येन व्यभिचारात् सामान्यवत्त्वं हि विशेषणम् । उदाहरणे प्रयोजकांशे यथा यदस्मदादिबाह्येन्द्रियग्राह्यं तदनित्यं यथा घट इत्युक्ते प्रयोजकांशन्यूनतया प्रत्युक्ते सामान्यवत्त्वे सतीति । उपनये यथा तथा चायमस्मदादिबाह्येन्द्रियग्राह्य इत्युक्ते तथैव प्रत्युक्ते तथैव विशेषणम् । दूषणे यथा हेतौ प्रयुक्ते साधकोऽयं न भवति सपक्षे सत्त्वात् अनित्ये प्रमेयत्ववदित्युक्ते जात्युत्तरत्वेन दूषिते विपक्षवृत्तित्वे सति सपक्षे सत्त्वादिति एवं विपक्षव्यावृत्तत्वात् गन्धवत्त्ववदित्युक्ते सपक्षव्यावृत्तत्वे सतीति विशेषणनिक्षेपेण परोक्तदोषप्रतीकारेऽपि हेत्वन्तरमेव अप्रतीकारे तु साधने हेत्वाभासो दूषणे निरनुयोज्यानुयोगः स्यात् । तथापि हेत्वन्तरमेवोद्भाव्यं सिद्धत्वात् साध्यत्वाच्च तयोः पूर्वमप्यदुष्टस्य दोषाभासोद्भावने विशेषतः पर्यनुयो-

---

सपक्षे सतोऽसाधकत्वे दूषणवाक्यस्यापि तथात्वेन स्वव्याघातप्रदर्शनेन । गन्धवत्त्ववत् नित्या भूः गन्धवत्त्वादितिवत् । अप्रतिकारे त्विति । विशेषणप्रतिक्षेपेऽप्यनैकान्तिकत्वाद्यपरिहारे साधनस्य तत्तद्धेत्वाभासो व्यवस्थित एव दूषणस्य निरनुयोज्यानुयोगो व्यवस्थित इत्यर्थः । सिद्धत्वाद्विशेषणप्रक्षेपस्य प्रथमतः कृतत्वात् । साध्य-

क्योपेक्षणसध्रीचीनमिदं सद्धानिवदुद्भाव्यं परिकर-शुद्धिः प्रतिज्ञान्तरवद्द्रष्टव्येति ॥

**प्रकृतानुपयुक्तोक्तिरर्थान्तरमिति स्थितिः ॥ ६ ॥**

प्रक्रान्तस्य साधनस्य दूषणस्य वानुपयुक्तमनङ्गं यत् तस्य वचनमर्थान्तरं नाम निग्रहस्थानं भवति। तदुक्तम् प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरमिति।अन्यदित्यध्याहाराल्लक्ष्यपदस्यार्थान्तरमित्यस्यावृत्तेर्वा प्रकृतमर्थमपेक्ष्येति ल्यब्लोपाद्वा पञ्चम्युपपत्तिः। अन्यथा तृतीया स्यात्। अप्रतिसम्बद्धार्थमननुरूपसम्बद्धार्थवचनमर्थान्तरं नाम निग्रहस्थानमित्यर्थः। तच्च स्वपरोभयानुभयमतभेदेन चतुर्विधम्। स्वमतेन ता-

---

त्वाच्च तयोर्हेत्वाभासनिरनुयोज्यानुयोगयोः विशेषणप्रक्षेपेऽप्युन्नेयत्वेन पश्चात् सिद्धत्वादित्यर्थः। परिकरशुद्धिः इदं न हेतुज्ञानवतः पूर्वमुक्तस्यापरित्यागात् त्यक्तस्य विशेषणाभावस्य पूर्वमनुक्तत्वादिदं तृतीयकक्ष्यातिपाति तदुत्तरकक्ष्योद्भाव्यमित्याह।

प्रक्रान्तस्य आरब्धस्य अन्यदित्यध्याहारात् प्रस्तुतादर्थादन्यदर्थेनाननुरूपसम्बन्धं वस्तु तस्य तस्य वचनमर्थान्तरमित्यर्थः। लक्ष्यपदस्येति। प्रक्रान्तादर्थान्तरं यत् तेनानुरूपसम्बन्धं तस्य वचनमर्थान्तरमिति वेत्यर्थः। प्रकृतमर्थमिति। प्रस्तुतमर्थं प्रकृत्य यदनभिमतसम्बन्धं वस्तु तस्य वचनमर्थान्तरमिति वेत्यर्थः। अत्र स्वपरशब्देन

वत् अनित्यः शब्द ऐन्द्रियकत्वात् गुणश्च सः आकाशस्य च । तदुपहितं श्रोत्रं तेन चायं गृह्यते समवायात् स च नित्यः सम्बन्ध इत्यादि । परमतेन तु तथैवोपक्रम्य द्रव्यं शब्दः संयोगेन गृह्यते ताल्वादिव्यापाराभिव्यङ्ग्यं चेत्यादि । उभयमतेन तु तथैवोपक्रम्य नित्यत्वं चास्यानुमानगम्यं तच्च प्रमाणम् । तच्चतुर्विधं षड्विधं चेत्यादि । उभयमतबहिर्भावेन यथा तथैवोपक्रम्य हेतुरयं हेतुश्च हिनोतिर्धातोस्तुन्प्रत्यये कृदन्तं पदमित्यादि झटिति दोषस्फुरणे समाधानमपश्यतस्तत्तिरोधानार्थमस्योक्तिः संभवति । अत्र न्यूनादिसंभवे ऽपि तस्योक्तग्राह्यत्वादस्य चोच्यमानग्राह्यत्वादिदमेवोद्भाव्यम् । अन्यथा प्राप्तावसरस्यानुद्भावनेन निग्रहापत्तेः । अत्र च प्रकृतोपयुक्तमेव ब्रूयादिति रहस्यम् ॥ ६ ॥

अवाचकप्रयोगे स्यान्निरर्थकसमुद्भवः ।

अवाचकपदं प्रयुञ्जानस्य वादिनो निरर्थकं नाम निग्रहस्थानं भवति । तदुक्तम् वर्णक्रमनिर्देशवन्निरर्थकमिति । वर्णानां क्रमनिर्देशो मातृकापाठकः । तेन तुल्यं वर्तते यद्वचनमवाचकप्रयोगादिरिति यावत् ।

वादिप्रतिवादिनौ नैयायिकमीमांसकौ गृह्येते । तथैवोक्तस्य अनित्यः शब्द ऐन्द्रियकत्वादित्यारभ्य द्वितीयकक्ष्योद्भाव्यमिति द्रष्टव्यम् ॥ ६ ॥

तन्निरर्थकं नाम निग्रहस्थानमित्यर्थः । अवाचकप्रयोगश्च बहुप्रकारः । कचटतपेत्यादिवर्णमात्रोच्चारणम् लिङ्गवचनविभक्तिविपर्यासः कृत्तद्धितसमासाख्यातविपर्यासः संस्कृतमुपक्रम्य म्लेच्छभाषावचनमित्यादि । एवमपि कथञ्चिदर्थप्रत्ययसिद्धेः कथमयं निग्रहहेतुरिति चेत् नामीमांसकानामपि वाचकावाचकविभागस्य सिद्धत्वात् । यस्याप्ययमसिद्धः तस्यापि समानसमयैरेव पदैर्वक्तव्यम् । अन्यथा स्वाज्ञानसंवरणार्थं स्वभाषया प्रत्यवतिष्ठमाने दाक्षिणात्ये तूष्णींभाव एव शरणमार्यस्येत्यज्ञानमेवावशिष्यत इति गतं कथाव्यसनेन । न च दुर्ज्ञानं समानसमयत्वं परबुद्धेरप्रत्यक्षत्वादिति वाच्यम् । प्रथमत एवोभयप्रसिद्धव्याकरणादिव्यवहाराङ्गीकारेण लिङ्गविपर्यासादीनां समानसमयत्वाभावनिश्चयोपपत्तेः । अत्र च समानसमयैरेव पदैर्व्यवहरेदित्युपदेशः ॥

---

लिङ्गवचनेति । नियतलिङ्गानां पदानां लिङ्गान्तरोच्चारणं लिङ्गविपर्यासः वृक्षं तिष्ठतीत्यादिकः । विभक्तिविपर्यास. । कपिः कलं कूजन्ति पिकोऽलं काममदहदित्यादिकः । वर्णविपर्यासवचनं प्राकृतपैशाचिकद्राविडादिभाषावचनम् । आदिशब्देन लेणोनकृत्तद्धितसमासविपर्यासमाह । एवमपि लिङ्गादिविपर्यासे सत्यपि । न वाच्यमिति सम्बन्धः । दुर्ज्ञानं ज्ञातुमशक्यम् । समानसमयत्वं बुद्धिविशेषसाम्यम् । प्रथमत एव कथारम्भात् प्रागेव ॥

**त्रिभङ्ग्यन्तरमुक्ते ऽपि प्राश्निकैः प्रतिवादिना ॥ ७ ॥**

**वाक्यमज्ञायमानार्थमविज्ञातार्थमुच्यते ।**

वादिना त्रिभङ्ग्यन्तराभिधाने ऽपि प्राश्निकैः प्रतिवादिना चाविज्ञायमानार्थमविज्ञातार्थं नाम निग्रहस्थानं भवति । तदुक्तम् । परिषत्प्रतिवादिभ्यां त्रिरभिहितमपि अविज्ञातमविज्ञातार्थमिति । वादिना त्रिरभिहितमपि परिषत्प्रतिवादिभ्यामर्थवत्तयाऽविज्ञातमविज्ञातार्थमित्यर्थः । तच्च त्रिविधम् । स्वतन्त्रमात्रप्रसिद्धम् रूढिमनपेक्ष्य योगापेक्षया प्रवृत्तम् निर्णयोपायप्रकरणाद्यभावेन संशयाक्रान्तं चेति । तत्राद्यं स्फ्यकपालपुरोडाशदशापवित्रादिमीमांसकानां पञ्चस्कन्धद्वादशायतनचतुरार्यसत्येत्यादि बौद्धानाम्।

---

त्रिभङ्ग्यन्तरमेकस्य वाक्यस्य त्रिप्रकारमेकार्थवाक्यत्रितयं वा । प्राश्निकैः सभ्यत्वेन वृत्तैः । प्रकरणाद्यभावेन प्रकरणौचित्यादिप्रस्तावाभावेन । यज्ञपात्रविशेषाः स्फ्यकपालादयः । पुरोडाशं होमद्रव्यम् । दशापवित्रं पात्रसम्मार्जनं वस्त्रम् । आदिशब्देन चमस(?) उपलादि गृह्यते । पञ्चस्कन्धेति । रूपवेदनाविज्ञानसंज्ञानसंस्काराः पञ्चस्कन्धाः । षडिन्द्रियाणि षड्विषयाश्च द्वादशायतनानि । आचार्यस्य शुद्धोदनेः चत्वारि सत्त्वानि दुःखसमवायनिरोधमार्गः श्रवणमनननिदिध्यासनतत्त्वज्ञानानि आ-

द्वितीयं तु पयःपयोधिसंभूताकान्तपदवैशेषिकधर्मः पूर्वैकावधिपदार्थोपलक्षितवस्तुसत्तावान् नियतपूर्वकालवर्तिपदार्थसमवेतत्वात् पाकव्यापारनिष्पन्नसंयोगासमवायिकारणद्रव्यवदिति । तृतीयं तु श्वेतो धावतीति तत्राद्यं परसिद्धान्तपरिज्ञानशौण्डीर्याभिमानेनोभयानुमत्या कदाचिदुपादीयेतापि उत्तरं तु द्वयं सर्वथा अनुपादेयमेव। अन्यथा प्रतिवाद्यपि वैयात्यात्तादृशमुपाददानो न निगृह्येतेति कथाभासप्रबन्धः स्यात् । तर्हि किं त्रिरभिधानापेक्षया प्रथमत एवाविज्ञाते तयोद्राव्यतामिति चेत् न अनवधा-

---

दिक्षणसंवृत्त्यादिकं गृह्यते । द्वितीयं केवलयौगिकवचनं पयःपयोधीति पयःपयोधिसम्भूता क्षीराब्धिजाता लक्ष्मीः तस्याः कान्तो विष्णुः तस्य पदं वियत् तस्य वैशेषिकधर्मः शब्दः पूर्वैकावधिपदार्थः प्रध्वंसाभावः तदुपलक्षितवस्त्वनित्यं तत्सद्भावः अनित्यत्वं तद्वान् अनित्यत्वधर्मयुक्तो भवितुमर्हतीत्यर्थः । नियतपूर्वकालवर्ती पदार्थ उपादानकारणं तत्र समवेतत्वात् कार्यत्वादित्यर्थः । पाकव्यापारेति उदाहरणार्थं कुलालादिव्यापारसंजातावयवसंयोगासमवायिकारणघटादिवदित्यर्थः। श्वेतो धावतीत्यत्र संशयाक्रान्तत्वं धवलः कश्चिद्द्रवादि धावतीति श्वा इतो देशान्तरं प्रति धावतीत्यनयोरर्थयोरन्यतरनिर्णायकाभावाद् द्रष्टव्यम् । आद्यं स्वीयमतसिद्धार्थवचनम्। शौण्डिर्यं कौशलम्। वैयात्यात् सामर्थ्यात्। परि-

वादिशङ्कानिराकरणाय प्राश्निकैरपेक्षणात् । तर्हि कुतोयमिति नियमः । ततः परमज्ञानस्योक्तिदोषहेतुकत्वविनिश्चयेन परिषदानपेक्षणात् । न हि परिषदपेक्षया वादी पुनरभिधत्ते नावधत्ते चेति संभवति । न च विदुषी परिषद्द्वयोभूयः सम्यगुक्तमपि नावगच्छति । न च वीतरागद्वेषेयमवगते ऽप्यनवगतिमाविष्करोति । अतस्त्रिरिति नियम इत्याचार्याणामाशयः । परिषदनुज्ञोपलक्षणं त्रिरभिधानमिति भूषणकारः । चतुरभिधाने ऽपि न कश्चिद्दोष इति वदतस्त्रिलोचनस्यापि स एवाभिप्रायः । त्रिरभिधानं च पूर्वोक्तस्यैव वाक्यस्येति केचित् । अन्ये तु तस्मिन्नेवार्थे वचनभङ्गिभेदेनेति । तदभिप्रायेणात्रोक्तं त्रिभङ्गतरमिति । अन्यथा त्रिरित्येवावक्ष्यदिति पराज्ञानापादनव्यामोहादिनास्योक्तिसम्भवः । अत्र च लोकरूढं गमितयोगं

---

हरति । ततः परमज्ञानस्येति । निरुक्ते ऽप्यनवधानशङ्का भवत्वित्यत्राह । न हि परिषदपेक्षयेति । न हि सम्भवतीति सम्बन्धः । असम्भवमेवाह । न च विदुषीति । स एवाभिप्रायः चतुरभिधाने ऽपीत्यपिशब्दयोगात् त्रिरेति नियम एवाभिप्राय इत्यर्थः । त्रिरित्येव त्रिरुक्ते ऽपीत्येव । पराज्ञानेति । परमज्ञं करिष्यामीति भ्रान्त्या लोकरूढं लोकप्रसिद्धार्थं गमितयोगम् अवयवशक्त्यनुसारेणावगमितयोगम् ।

प्रकरणादिसध्रीचीनं निरस्तदोषमेव वाक्यं ब्रूयादिति रहस्यम् ॥ ७ ॥ ५५ ॥

**पदजातं वाक्यजातमनन्वितमपार्थकम् ॥ ८ ॥**

गुणप्रधानभावेनानन्वितार्थं पदजातं वाक्यजातं वापार्थकं नाम निग्रहस्थानमिति । तदुक्तम् पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकमिति । पौर्वापर्यं विशेषणविशेष्यभावः तस्यायोगो नैराकाङ्क्ष्यम् । तस्मादनन्वितार्थमपार्थकमित्यर्थः । न चेदं निरर्थकं वाचकत्वात् । न चार्थान्तरम् अन्वयाभावात् । सर्वथाप्यसम्भवदन्वयम् यथा कुण्डमजाजिनं फलं पिण्ड इति । दश दाडिमानि षडपूपा इति च । व्यवधानादनन्वयं यथा ओदनं सरसि भुक्त्वा स्नातो यातीति ।

---

प्रकरणादिसध्रीचीनम् अर्थनिर्णायकप्रकरणलिङ्गादिसहितम् ॥ ७ ॥ ५५ ॥

गुणप्रधानभावेन विशेषणविशेष्यभावेन । अनपेक्षणमनभिमतार्थत्वादिदं वाक्यं निरर्थकान्तर्भूतमित्याशङ्क्याह । न चेदमिति । प्रस्तुतानुपयुक्तवचनत्वादिदमप्यर्थान्तरान्तर्भूतमित्यत्राह । न चार्थान्तरमिति । पललं मांसं पलालं वा । वाक्ययोरनन्वयमुदाहरति दश दाडिमानि षडपूपा इत्यादि । व्यवधानादनन्वयमाकाङ्क्षणीयस्य पदस्य दूरस्थत्वेन झटित्यस्पर्शान्वयम् । सरसि स्नात्वोदनं भुक्त्वा यातीत्यन्वयः । विकल्पशेषादनन्वयं भवतीति सम्बन्धः ।

विकल्पशेषानन्वयम् संभाव्यमानसर्वान्वयप्रकारनिरासे तदनभ्युपगमाद्भवति । तत्रान्यतमान्वयाभ्युपगमे तु तदन्वयोक्तखण्डनमेव निग्रहः । अत्रोत्तरयोः पराज्ञानापादनव्यामोहात् प्रमादाच्चोक्तिसंभवः । प्रथमस्य वक्तृकौशलेनापि संभवः यथा नित्या वेदाः अनादिश्च संसारः अकर्तृकं च क्षित्यादि जगद्वैचित्र्यं च न निर्हेतुकमिति । अत्रान्वितमेव वदेदित्युपदेशः ॥

विवक्षितक्रमं वादवादाङ्गावयवादिकम् ।
विपर्यस्तं वदति चेत् प्राप्तैवाप्राप्तकालता॥९॥

आदिशब्देनात्रावयवांशं कथारम्भं च संगृह्णाति । अयमिह कथायां विवक्षितक्रम । सभ्यानुविधेयसंवरणानन्तरं तत्सन्निधावुभयप्रसिद्धव्याकरणादिव्यवहारमभ्युपगम्य कथाविशेषादिनियमः करणीयः । ततः सभ्योपक्षिप्ते प्रतिवादिना वा पृष्टे प्रमाणमभि-

वायुक्तस्य वाक्यस्य संभावितं नानाविधमन्वयं विकल्प्य तस्य सर्वस्यान्वयस्य दोषाभिधाने सति अवशिष्टान्वयाभावादपार्थकं भवतीत्यर्थः । तत्र विकल्पितेषु मध्ये । तदन्वयोक्तखण्डनमेव तत्तदन्वयप्रकाराणामुक्तदोप एव निग्रहस्थानमपार्थकमित्यर्थः । उत्तरयोर्व्यवधानादनन्वयविकल्पशेषानन्वययोः ॥

'' व्याकरणादीत्यादिशब्देन प्राकृतपैशाचिकसंस्कृतपद्यबन्धादिव्यवहारो गृह्यते । कथाविशेपनियमः आवाभ्यां कथात्रये ऽन्यतमकथायामेव वक्तव्यमिति नियमः कर्तव्य

धाय संक्षेपतो विस्तरतो वा हेत्वाभासा उद्धरणीयाः। प्रतिवादिनाप्यनुभाषणपुरःसरं वादिसाधनं दूषयित्वा स्वपक्षे साधनमभिधेयम् तत आभासोद्धारः कर्तव्यः वितण्डायां तु दूषणमात्र एव पर्यवसातव्यमिति। तत्र प्रथमं साधनमभिधाय पश्चाद्व्यवहारादिकं नियच्छतः कथारम्भविपर्यासः। आभासोद्धारानन्तरं साधनं प्रयुञ्जानस्य वादाङ्गविपर्यासः। प्रतिवादी तु यदि स्वपक्षसाधनानन्तरं परपक्षमुपालभते तदा वादविपर्यासः। अवयवविपर्यासस्तु कृतकत्वाच्छब्दोऽनित्य इति। अनित्यः शब्द इत्यवयवांशविपर्यासः। एवं वादजल्पयोः पञ्चविधो विपर्यासः। इतरत्र चतुर्विध

---

इत्यर्थः। सभ्योपक्षिप्ते त्वमेनं प्रत्ययमुमर्थं साधयस्विति सभ्यैरुपस्थापिते ऽर्थे न तु स्वाभिमत इत्यर्थः। प्रतिवादिना वा सभ्यैरुपस्थापिते ऽप्यस्मिन् साध्ये किं प्रमाणमिति प्रतिवादिनापि पृष्टे ऽर्थे। यद्वा वादकथायां त्वदीये साध्ये किं प्रमाणमिति प्रतिवादिनापि पृष्टे ऽर्थे। अनुभाषणपुरःसरं वाद्युक्तं सकलं स्वदूष्यमात्रं वानुभाष्येत्यर्थः। अभिधेयं वक्तव्यम्। दूषणमात्र एवेति। वितण्डायां प्रतिवादिनः स्वपक्षासद्भावे ऽपि तस्य साधनाभावाद्वादिसाधनदूषणमेव कर्तव्यमित्यर्थः। व्यवहारादिकमिति। व्यवहारोऽत्र संस्कृतायन्यतममेवावाभ्यां व्यवहर्तव्यमिति निश्चयः। आदिशब्देन सभ्यानुविधेयचरणादिकं गृह्यते। अनित्यः शब्द इत्यवयवांशविपर्यासः स च

इति। केचित्तु प्रतिवाद्युद्भावित सवाभास उद्धरणीयः साधनाभिधानानन्तरं स्वयमेवाभासोद्धारे त्वनवस्थाप्रसङ्गात् । तथा च न वादाङ्गविपर्यास इत्याचक्षते। आचार्यास्तु व्याघातावधिराशङ्केत्यनवस्थापरिहारं पश्यन्तः प्राचीनमेव पक्षमुररीकुर्वन्ति । भूषणकारस्तु विपर्ययेणार्थप्रतीतिसम्भवादपशब्दवन्नियमकथायामेवैतन्निग्रहस्थानमिति मन्यतेस्म। तदयुक्तम्। अनुपक्षिप्ते साधने निराश्रयदोषोद्धारासम्भवादुपक्षिप्तं दूष्यमदूषयित्वा प्रतिवादिनोपि स्वपक्षसाधनस्यानः इत्यादवयवतदंशयोः क्रमावश्यम्भावस्य प्रथमाध्याये

---

धर्मिणि धर्माश्चिन्त्यन्त इति न्यायात् सिद्धधर्मिणमुद्दिश्य तत्राप्रसिद्धसाध्यधर्मविधिरुचितः अत्र तथाकरणात् प्रतिज्ञांशविपर्यास इत्यर्थः। इतरथेति । वादविपर्यासाभावात् वितण्डायां चतुर्विधविपर्यास एवेत्यर्थः। अनवस्थाप्रसङ्गात् प्रतिवाद्यभिमतदूषणजातमाशङ्क्य समाधानेन कथाप्रबन्धानुच्छेदप्रसङ्गादित्यर्थः । व्याघातावधिराशङ्केति। यावत् न स्ववचनव्याहतिप्रसक्तिस्तावदेवाशङ्का प्रवर्तते तत आशङ्कानवस्थानं न प्रसज्यत इति पश्यन्त इत्यर्थः। विपर्ययेण कथारम्भविपर्यासादिकरणादिना । नियमकथायां विवक्षितक्रमेणैवाचार्याभ्यां वक्तव्यमिति नियमपूर्विकायां कथायाम् । कथामात्रस्य क्रमापेक्षास्तीत्युपपादयति । अनुपक्षिप्त इति । प्रथमाध्याय इति। प्रमाणतद्विशेषतदवयवादिलक्षणं प्रथमेध्याये क्रमेण

साधितत्वात्स्वार्थप्रतीतिसम्भावनामात्रेण प्रयोगाङ्गीकारे कृतवासदिवादरभूतदिवेत्यादीनामपि प्रयोगप्रसङ्गात्। यथाकथञ्चिदर्थप्रतीतिः साध्येत्यभिमानात् सभाक्षोभाद्वास्योक्तिसम्भवः । अवयवविपर्यासवचनमप्राप्तकालमितिसूत्रे ऽवयवशब्दः कथाभागोपलक्षणार्थः। अत्र चाकाङ्क्षाक्रमेण ब्रूयादिति संक्षेपार्थः॥ ९॥

आत्मसिद्धान्तसिद्धेषु वादाङ्गावयवादिषु ।
एकस्यावचने प्राहुरन्यूनं न्यूननिग्रहम् ॥ १० ॥

आदिशब्देनात्र कथारम्भमुपादत्ते। तेन यथा स्वसिद्धान्तेष्ववश्योपादेयत्वेन सिद्धा वादतदंशावयवकथारम्भाणां मध्ये यस्य कस्यचिदवचने न्यूननाम निग्रहस्थानं भवति। व्यवहारनियमादिकथारम्भमकृत्वा साधनं प्रयुञ्जानस्य कथारम्भन्यूनम्। साधनं प्रयुज्याभासोद्धारमकुर्वाणस्य तत्करणेन वा साधनमप्रयुञ्जानस्य वादांशन्यूनम्। प्रतिवादिनोपि स्थापनामदूष-

---

वदता सूत्रकारेण समर्थितत्वादित्यर्थः। कृतवासेत्यादेरर्थो मया यथावन्न तत्त्वतो ज्ञायते। कथाभागोपलक्षणार्थः कथारम्भवादतदंशावयवतदंशाख्यकथाभागमुपलक्षयतीत्यर्थः ॥ ९ ॥

अन्यूनं सलक्षणं (?)अवयवांशन्यूनस्य हेत्वाभासरूपत्वादत्र गणनेत्यर्थः। तत्करणेन हेत्वाभासोद्धारणेन तद-

यित्वा स्वपक्षं साधयतस्तदसाधनेन वा तां दूषयतो वादन्यूनं प्रतिज्ञादीनामन्यतमस्यावचने त्ववयवन्यूनमिति चतुर्विधमेतत् । हीनमन्यतमेनाप्यवयवेन न्यूनमितिसूत्रमुपलक्षणपरं योजनीयम् । ननु यदि सौगतो द्व्यवयवं प्रयुङ्क्ते तदा न्यूनेन निगृह्येत तत्परिहारार्थं पञ्चावयवप्रयोगे त्वपसिद्धान्तेन ततोवयवपरिमाणचिन्तायामर्थान्तरत्वप्रसङ्गः । अशक्या च सा तन्निरूपकस्याप्यनुमानस्यानिर्णीतावयवपरिमाणत्वादिति । तदेतत्प्रबोधसिद्धिकार एव परिजहार यदाह । स्वसिद्धान्तनिर्णीतप्रयोगावयवपरिमाणापेक्षया न्यूनाद्यवतार इति । अन्यत्राप्युक्तम् । स्वात्मसिद्धान्तसिद्धेष्विति । हन्तैवमयमपसिद्धान्त एव स्यात् । न हि सिद्धान्तविरुद्धाचरणमपसिद्धान्तः । सर्वनिग्रहस्थानानामप्यपसिद्धान्तत्वप्रसङ्गात् । अपि तु सिद्धान्तविरुद्धाभ्युपगमः । अत्र च न्यूनस्य गमकत्वानभ्युपगमे ऽपि सभाक्षोभेण स्तम्भितस्य न्यूनप्रयोगोपपत्तिः । वचनलिङ्गा हि वक्तुरभिप्राया इति न्यूनवचनेनैव तस्य गमक-

---

साधनेन स्वपक्षस्यासाधनेन । तत् स्थापनावादिसाधनमित्यर्थः । सूत्रमुपलक्षणपरं सूत्रगतावयवशब्देन कथारम्भवादवादांशा अपि लक्ष्यन्त इत्यर्थः । द्व्यवयवमुदाहरणोपनयरूपम् । अशक्या च सा अवयवपरिमाणचिन्तेत्यर्थः । न्यूनादीत्यादिशब्देन अधिकस्वीकारः । एवं स्व-

त्वाभिप्रायस्योन्नयने ऽपि तस्य जघन्यत्वेनास्यैव निग्रहहेतुत्वम् । अथवा यथावस्तु यथासिद्धान्तं व्यवहर्तव्यमिति नियमात् पूर्वं न्यूनस्यावतारः तदुत्तरं त्वपसिद्धान्तस्य न वावयवैयर्थ्यचिन्तायामर्थान्तरत्वमन्यतरासिद्ध्युद्भावने हेतोः सिद्धिव्युत्पादनवत् प्रकृतोपयोगात् । अत्र परिपूर्णं ब्रूयादिति संक्षेपः ॥ १० ॥

**अन्वितस्योपयुक्तस्य पुनरुक्तेतरस्य या ।**
**कृतकार्यकरस्योक्तिरधिकं तत् प्रचक्षते ॥ ११ ॥**

अन्वितमुपयुक्तमपुनरुक्तं कृतकार्यकरमभिधीयमानमधिकं नाम निग्रहस्थानम् । अन्वितत्वादिविशेषणैरपार्थकार्थान्तरपुनरुक्तानां व्यवच्छेदः । हेतूदाहरणाधिकमधिकमितिसूत्रं दूषणानुवादाधिकयोरप्युपलक्षणम् । हेतूदाहरणग्रहणेनावयवान्तराधिक्यासम्भवं सूचयति । न हि प्रतिज्ञानिगमनयोरधिकं

---

सिद्धान्तसिद्धावयवन्यूनादिवचने । जघन्यत्वेन न्यूनप्रतीत्यनन्तरभावित्वेन । अन्यतरासिद्धीरिति । शब्दो नित्यः कृतकत्वादित्यत्र मीमांसकेनासिद्धो हेतुरित्युक्ते शब्दः कृतको ऽनभिव्यञ्जकप्रयत्नानन्तरभावित्वादित्यर्थः ॥ १० ॥

अन्वितत्वादिविशेषणैरिति । प्रकृतार्थासङ्गतवचनमपार्थकं सङ्गतौ सत्यामपि प्रकृतानुपयोगिवचनमर्थान्तरम् प्रकृतान्वये उपयोगे सत्येककार्यविषयं पुनर्वचनं पुनरुक्तम् उक्तरूपत्रयसद्भावे ऽपि सप्रयोजनत्वात् अनुवादो न निग्रहः तत एतैश्चतुर्भिर्विशेषणैः एतच्चतुष्कं व्यवच्छिद्यमि-

सम्भवति । एकार्थत्वे पुनरुक्तिप्रसङ्गात् । अन्यथा प्रकृतासङ्गतार्थान्तरत्वप्रसङ्गात् । अपरथापार्थकत्वप्रसङ्गाच्च उपनयाधिकं तु हेत्वधिकान्न विशिष्यते । एतच्च विशेषतः स्वशब्देनोपादानात् सामान्यत आदिशब्दोपादानाच्च द्विधा वर्तते । यथा अग्निमान् पर्वतः धूमवत्त्वात् आलोकवत्त्वादिति स्वशब्देन धूमादिमत्त्वादित्यादिशब्देन यथा महानसः यथा आपाक (?) इति । यथा महानसादिरिति च । असिद्धो हेतुरनैकान्तिकश्चेत्यादि । अनुवादाधिकं तु प्रकृतानुपयोगादर्थान्तर एवान्तर्भावयन्ति केचित् । परिषत्प्रतिवादिजिज्ञासानुरोधस्य कथाङ्गत्वेनाप्रतिपत्तेः अनङ्गत्वेन वा विप्रतिपत्तेस्तदनपेक्षितमधिकं ब्रुवाणस्याप्रतिपत्तिविप्रतिपत्ती स्त एवेत्यस्य निग्रहस्थानत्वं युक्तमेव । परिषज्जिज्ञासायां यावत्स्फूर्ति वक्तव्यम् । न च तत्रापि सामस्त्यनियमाभ्युपगमोऽसर्वज्ञेन शक्यः । दूषणाभि-

---

त्यर्थः । अन्यथा भिन्नार्थत्वे प्रकृतानुपयुक्तार्थत्व इति यावत् । अपरथा अनुपयुक्तत्वे प्रकृतानन्वये च सतीत्यर्थः । एतच्च अधिकारभूतनिग्रहस्थानम् । अनैकान्तिकश्चेत्यादीत्यादिशब्देन असिद्धत्वादिदोषवान् हेतुरित्यादिकं गृह्यते । वाग्मित्वातिशयज्ञापकस्याधिकस्य कथं निग्रहस्थानत्वमित्याशङ्क्याह । परिषत्प्रतिवाद्यविज्ञापितं न तत्रापि परिषदनुज्ञासद्भावे ऽप्येकस्य साध्यसाधनान्तरसद्भावात्

धाने तु शक्यत एव तेषां परिमितत्वादिति । अत्र चाकृतकरमेवं वदेदिति संग्रहः ॥ ११ ॥

**शब्दादाक्षेपतो वापि प्रतीतस्यैव कीर्तनम् ।**
**प्रयोजनविनाभूतं पुनरुक्तमिति स्थितिः ॥ १२ ॥**

प्रतीतस्यैवार्थस्य प्रयोजनमन्तरेण पुनरपि शब्देन प्रतिपादनं पुनरुक्तम् । सप्रयोजनं पुनर्वचनमनुवादः । यथा निगमने पक्षस्य । तद्व्यवच्छेदार्थमुक्तं प्रयोजनविनाभूतमिति न केवलं शब्दतः प्रतिपन्नस्यैवाक्षेपतः प्रतिपन्नस्यापि पुनर्वचनं पुनरुक्तमिति दर्शयितुमाक्षेपत इत्युक्तम् । ततश्च पुनःशब्देनोक्तेरावृत्तिमाह । किं तु प्रतीतिरित्युक्तं भवति । कीर्तनमितिशब्देनैव प्रतिपादनं विवक्षितम् । तेनार्थादापन्नस्य पुनरर्थादापत्तिर्न दोषायेति दर्शितं भवति । त्रिविधं चैतत् । शब्दपुनरुक्तमर्थपुनरुक्तमपक्षेपपुन-

---

तत्सर्वमहं वदामीति प्रतिज्ञातुमनीश्वरेण न शक्यमित्यर्थः ॥ ११ ॥

प्रतीतस्यैव परिषदा प्रतिवादिना वा अवधानेन ज्ञातस्य । ततश्च शब्दतः तात्पर्यतश्च सिद्धस्य पुनरपि शब्देन प्रतिपादनं पुनरुक्तमिति स्थितत्वाचेत्यर्थः । एवं वाक्ये ऽर्थापत्त्याख्ये ऽनुमानभङ्गे एवं पुनरुक्तिरुदाहर्तव्येति शेषः । पुनरुक्तिलक्षणे सूत्रान्तरमाह । अर्थादापन्नस्येति । प्रतिपन्नार्थस्य पुनर्वचनं पुनरुक्तिरिति वक्तव्ये सति शब्दावयवयोः

रुक्तं चेति । तत्राद्यं यथा अनित्यः शब्दोऽनित्यः शब्द इति । द्वितीयं तु पर्यायेणाभिधानं यथा अनित्यः शब्दः विनाशी ध्वनिरिति । तृतीयं तु अग्निनोष्णेन युक्तः पर्वतः उष्णेनाग्निना युक्त इति च । एवं वाक्ये ऽपि जीवन् देवदत्तो गृहे नास्तीत्युक्त्वा वहिरस्तीत्यादि । तदेतत् सर्वमुक्तम् । शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादादिति अर्थादापन्नस्य स्वशब्देन पुनर्वचनमिति च नियमकथायामेव पुनरुक्तं निग्रहस्थानं नान्यत्रेति विश्वरूपादयः । शब्दपुनरुक्तस्य भेदेन निर्देशोऽप्यर्थभेदे ऽप्युक्तशब्दो न पुनर्वक्तव्य इति नियमकथायां शब्दमात्रपुनरुक्तिरपि निग्रहस्थानमिति सूचयितुमिति विश्वरूपजयन्ताविति ॥ १२ ॥

**ज्ञातार्थं प्राश्निकैर्वाक्यं त्रिरुक्तं नानुभाषते ।**
**योऽनुद्भाव्य स्वमज्ञानं तस्यैवाननुभाषणम् ॥ १३ ॥**

प्राश्निकैर्ज्ञातार्थमितिवचनात् प्रतिवादिज्ञानमविवक्षितमिति दर्शयति । त्रिरुक्तमित्युच्चारणयोग्यतामात्रप्रदर्शनपरम् न न्यूनाधिकसंख्याव्यवच्छेदपरमुक्तं वादिनेति शेषः । तदनुपादानं तु मन्दस्य

पुनर्वचनमिति सूत्रकारस्य तात्पर्यमाह । शब्दपुनरुक्तस्येति ॥ १२ ॥

उच्चारणयोग्यतामात्रं सभायामशक्तस्यासत्येवं दूषणादिव्यतिरिक्तत्वमात्रम्(?)। न न्यूनाधिकेति। प्रथमत एव परिषत्प्रतिपत्तिसिद्धेरविज्ञातार्थस्य त्रिरिति नियम इत्यर्थः। तदनुपादानं मूलपद्यकारेण वादिनेत्यनुक्तिः। अन्यथा

कदाचित् परिषदाप्यनूद्य दीयत इति सूचनार्थम् । अज्ञानानुद्भावनवदविच्छेदोपि कथायां विवक्षितः । अन्यथा विक्षेपस्यैवापातात् । तेनायमर्थः । वादिनोक्तस्य प्राश्निकैर्विज्ञातार्थस्य पुनर्वादिना परिषदा वानूद्य दत्तस्योच्चारणयोग्यस्याज्ञानमनाविष्कुर्वता कथामप्यविच्छिन्दता यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानमिति । न चात्राज्ञानाप्रतिभयोरवसरः ज्ञातार्थस्य स्फुरदुत्तरस्यापि सभाक्षोभेण वाक्कुण्ठत्वेन वाप्यननुभाषणोपपत्तेः । तयोस्तदानीमनिश्चयादननुभाषणस्य च योग्यानुपलब्धस्यैव निर्णीतत्वात् । अत्र च नञः पर्युदासवृत्तित्वाभ्युपगमात्तदित्यादिसर्वनाम्नानुवादो दूष्यैकदेशानुवादो यथानुवादः केवलदूषणोक्तिः स्तम्भनं चेति पञ्चाप्यननुभाषणत्वेन सङ्गृह्यन्ते । सर्वं चैतन्निग्रहस्थानमेव तूष्णीम्भावे दूषणाश्रयोपादानस्याङ्गत्वाप्रतिपत्तेः दूषणमात्रवचने निराश्र-

---

कथाविच्छेदे सति । तेन एवं यदस्यावयवार्थनिर्णयेन । कथामप्यविच्छिन्दता यत्किञ्चिद्वचनेन कथाभासप्रबन्धं कुर्वता प्रतिवादिनेति शेषः । वाक्कुण्ठत्वेन सदपातिना यथा यथा व्यवहारवैधुर्येण (!) । तयोस्तदानीमिति । अज्ञानाधिकारात् केवलं तूष्णीम्भावाभावाज्ञानाप्रतिभयोरननुभाषणसमये निर्णयाभावादित्यर्थः । योग्यानुपलब्धस्य श्रोतुं योग्यस्यानुभाषणस्याश्रुतत्वेन सिद्धस्य । पर्युदासवृत्तित्वं अनुभाषणव्यतिरिक्तवाचकत्वम् । दूषणाश्रयोपा-

यद्दूषणस्यादूषकत्वेनासाधनोपादानात् अयथानुवादे च दूषणोपादानाद्विप्रतिपत्तेः । एकदेशानुवादे च तथा एकदेशदूषणे तु समुदायस्यादूषितत्वात् । न ह्यनित्यत्वे साध्ये ऐन्द्रियकत्वमात्रस्यानैकान्तिकत्वेन गुणत्वेन विशेषितस्याप्यनैकान्तिकता स्यात् । सर्वनाम्नानुवादे ऽपि प्रकृतस्य भूयस्त्वेन सन्देहानतिक्रमेण तूष्णीम्भावाविशेषात् । न च दूषणस्वरूपयोग्यतया दूष्यविशेषनिश्चयः । असिद्धत्वादिना सर्वस्यापि दूष्यत्वात् । योग्यमेवायं ब्रवीतीत्यनिश्चयाच्च । दूष्यमात्रमेवानुभाषणीयम् न तु सर्वं वादिवाक्यम्

---

दानस्य वादिवाक्ये दूष्यमात्रानुवादस्य । असाधनोपादानार्थं दूष्यप्रतिक्षेपासमर्थदूषणोपादानरूपविप्रतिपत्तेरित्यर्थः । व्यधिकरणत्वेन वादिसाधनदूषणबुद्ध्या तद्व्यतिरिक्तमनूद्य दूषणवचनादित्यर्थः । तथेत्यविशिष्टप्रतिपत्तिमुपपादयति । गुणत्वेनेति । गुणत्वे सत्यैन्द्रियकत्वादित्युक्तस्येत्यर्थः । सन्देहानतिक्रमेण प्रकृतेषु मध्ये अस्यायं दोषो नान्यस्येति निर्णायकाभावेन । न च दूपणस्वरूपेति । विप्रतिपन्नमुपलब्धिमत्कारणमित्यत्र विप्रतिपन्नस्यानेकत्वे ऽपि यथा साध्यविशेषोपादानेन तद्विशेषसिद्धिरेवं दूषणस्वरूपविशेषसामर्थ्याद् दूष्यविशेषसिद्धिरिति न वाच्यं दूषणस्य साध्यवदन्यताश्रयावृत्तित्वाभावादित्यर्थः । योग्यमेवेति । दूषणयोग्यं प्रत्ययं प्रतिवादी दूषणं ब्रूते नान्यं प्रतीति वादिनो निश्चयाभावाच्च न विशेषनिश्चय इति

अनुपयुक्ताभिधानेनार्थान्तरत्वप्रसङ्गात् । प्रौढिप्रकटनाय सर्वानुभाषणनियमे तदकरणमेव निग्रहहेतुर्भवति । न च तेनैव वादिवाक्येनानुभाषणीयमिति नियमः । वाक्यान्तरेणानुभाषणे ऽपि तत्प्रयोजनसिद्धेः तत्प्रसिद्धपदैरेवानुवादेनानुभाषणमित्यननुभाषणाभासं दर्शयद्भिराचार्यैरेव वादिप्रसिद्धपदैरप्यनुभाषणस्याङ्गीकृतत्वाच्च विज्ञातस्य परिषदा त्रिरभिहितस्याप्रत्युच्चारणमननुभाषणमिति सूत्रं सुगममेवेति ॥ १३ ॥

**ज्ञाते ऽपि वादिवाक्यार्थे प्राश्निकैस्तत्र चेत् परः।**
**स्वाज्ञानमुद्भावयति तदाज्ञानेन निग्रहः ॥ १४ ॥**

वादिना त्रिरुक्ते प्राश्निकैर्ज्ञातार्थे सत्यपि वादिवाक्ये प्रतिवादी स्वाज्ञानमाविष्करोति न ज्ञायते मयेति तदा तस्याज्ञानं नाम निग्रहस्थानं भवति । अज्ञानानाविष्करणे त्वननुभाषणमेव निश्चितत्वादुद्भाव्यम् । अज्ञातं चाज्ञानमिति सूत्रे चकारः परिषद्विज्ञानं वादिनस्त्रिरभिधानं च समुच्चिनोति। अविज्ञातं वादिवाक्यं येन तस्याज्ञानमिति । अथवा भावे क्तोत्पत्तिरङ्गीकार्या यस्य वादिवाक्यार्थे अज्ञानं तस्याज्ञानमित्यर्थः ॥ १४ ॥

---

पूर्वेण सम्बन्धः । तत्प्रसिद्धपदैः वादिवाक्यव्यतिरिक्तपदैः। अननुभाषणाभासं निरनुयोज्यानुयोगविशेषम्॥१३॥

वादिवाक्यमर्थप्रतिपत्तये विशेषः । भावे क्तोत्पत्तिर्विशेष्यवाचकस्य शब्दस्य विशेषण धर्मपरत्वम् ॥ १४ ॥

**वाद्युक्तस्यानूदितस्य प्रतिवादी यदोत्तरम् ।**
**प्रतिपत्तुं न शक्नोति तदास्याप्रतिभा भवेत्[१] ॥१५॥**

वादिनोक्तस्य स्वेन चानुभाषितस्य वाक्यार्थस्य प्रतिषेधरूपमुत्तरं यदा प्रतिवादी न प्रतिपत्तुमीष्टे तदा तस्याप्रतिभा नाम निग्रहस्थानं भवति । तूष्णीम्भाववद्राजवार्त्तावतरणश्लोकादिपाठकेशादिविरचनगगनसूचनभूतलविलेखनादि यत् किञ्चित् क्रियान्तरकरणे ऽपि निगृह्यत एव न त्वपस्मारभूतावेशादिनिमित्तेषु तेषामपकर्षासूचकत्वात् । भूषणकारादयस्तु श्लोकादिपाठे ऽर्थान्तरापार्थकादिप्रसङ्गात् तूष्णीम्भावमेवाप्रतिभानिग्रहहेतुमाहुः । असत्साधने पर्यनुयोज्योपेक्षणसहचारिणी । इतरैस्त्वियमसङ्कीर्णा न चावश्योद्भाव्या उत्थितस्वेदादिना सुव्यक्तत्वात् । कथावसाने तिरोधानायोगाच्च उत्तरस्याप्रतिपत्तिरप्रतिभेति सूत्रमुक्तार्थमेवेति ॥ १५ ॥

---

गगनसूचकं गगनगतकार्ष्ण्यादिविशेषप्रदर्शनम् । निगृह्यत एव । अप्रतिभयेति शेषः । श्लोकपाठ इति । पठितस्य श्लोकादेः प्रकृतार्थान्वये सत्यनुपयुक्तत्वेनार्थान्तरत्वमनन्वये ऽपार्थकत्वं कस्यचिदर्थस्य वाचकत्वे निरर्थकत्वमित्यादिप्रसङ्गादित्यर्थः । असत्साधन इति । असङ्कीर्णा न निग्रहान्तरसहिता । उत्थितपराजयप्रकाशकविषादगर्वस्मितस्वेदादीत्यादिशब्देन देहकम्पगद्गदत्वादिकं गृह्यते ॥ १५ ॥

---

(१) भवेदप्रतिभा तदा—पा· A पु· ।

**कथामभ्युपगम्यैव तद्विच्छेदाय कस्यचित् ।
व्याजस्य वचने प्राहुर्विक्षेपं निग्रहग्रहम्[१] ॥ १६ ॥**

कथामुपक्रम्य परिषदि श्रोतुमेकतानमनसि प्रतियोगिनि च दत्तावधाने सम्प्रति मे महत्प्रयोजनमस्ति श्वः परश्वो वा कथयिष्यामीति कस्यचिद्व्याजस्य वचने विक्षेपलक्षणं निग्रहस्थानमाहुराचार्याः । अप्रतिभायां वृथाचेष्टाभिरिवात्रापि व्याजोत्तरेणाशक्तिरुन्नीयत एव । अत्र च ताम्बूलभक्षणोद्गिरणमूत्रोच्चारणाद्यावश्यकमनुष्यधर्मा व्याजा भवन्ति सर्वप्राणिधर्मत्वात् कथाविच्छेदाहेतुत्वाच्च । उपक्रमादारभ्य कथाया यावत् समाप्ति चास्यावसरः । अवश्योद्भाव्यं चैतत् अन्यथा अहङ्कारखण्डनाभावात् । कथाविच्छेदाहेतुत्वात् कार्यव्यासङ्गात् कथाविच्छेदो विक्षेप इति सूत्रं सुगममेव ॥ १६ ॥

**अनिष्टभ्रमतोऽन्येषामिष्टमापादयेद्यदि ।
मतानुज्ञेति तस्य स्यान्निग्रहस्थानमुद्भटम् ॥ १७ ॥**

निग्रहग्रहमपजयाख्यमपि वाच्यम् ।

कथामुपक्रम्य अन्येन वादं कर्तुं सभामध्यमारुह्य । मूत्रोच्चारणादीत्यादिशब्देन विवेकास्फुरणजकासष्ठीवनादिकं गृह्यते । इयं वादिप्रतिवादिनोर्द्वयोरपि सम्भवतीत्याह । उपक्रमादारभ्येति ॥ १६ ॥

(१) विक्षेपं नाम निग्रहम्—पा॰ B पु॰ ।

स्वसिद्धान्ते परेणापादितं दोषमनुद्धृत्य परस्यानिष्टबुद्ध्या इष्टप्रसञ्जनं मतानुज्ञेत्यर्थः । तथा च सूत्रम् । स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञेति । यथा केनचिदात्मनश्चोरत्वमभ्युपगम्य पुरुषत्वाच्चोरस्त्वमसीत्युक्ते तत एव हेतोस्त्वमपि चोर इति प्रसञ्जनम् । न ह्यनेनात्मनश्चोरत्वं परिहृतम् । न ह्येकमिन्धनमग्निसम्बद्धं दग्धमित्यन्यन्न दह्यते । न चायं प्रसङ्गः इष्टापादनत्वात् । तथा अनित्यः शब्दः कार्यत्वादित्युक्ते तत एव हेतोर्घटोऽप्यनित्यः स्यादित्यादीन्यप्युदाहरणानि । अत्रानिष्टमेव परस्य ब्रूयादिति रहस्यम् । भूषणकारः पुनरेवं व्याख्यातवान् । यस्तु स्वपक्षे दोषमनुद्धृत्य केवलं परपक्षे दोषं प्रसञ्जयति स तु परापादितदोषाभ्युपगमात् परमनुजानातीति मतानुज्ञया निगृह्यत इति । अत्र स्वदोषपरिहारेणैव परस्य दोषं प्रसञ्जयेदिति सङ्क्षेप इति ॥ १७ ॥

---

अनिष्टं प्रतिवादिनोभिमतं स्वपक्षे परोक्तदोषमनुद्धृत्येति शेषः । अनेन त्वमपि चोर इति वचनेन न हि दूष्यत इति सम्बन्धः । न चायं प्रसङ्गः त्वमपि चोर इति वचनं प्रस्तुतानुमानस्यानिष्टप्रसङ्गाख्यप्रतिकूलतर्को न भवतीति परस्य स्वचोरत्वस्येष्टत्वादित्यर्थः । आदिशब्दादीश्वरो न कर्ता आत्मत्वाज्जीववदित्युक्ते तर्हि तत एव जीवोप्यसर्वज्ञः स्यात् । क्षित्यादिकं नेश्वरकर्तृकं कार्यत्वाद् घटवदित्युक्ते तर्हि तत एव घटः सावयवी स्यादित्यादिकं

अवश्योद्भाव्यमापन्नकालं निग्रहमागतम् ।
अनुद्भावयतः पर्यनुयोज्योपेक्षणं भवेत् ॥१८॥

पर्यनुयोज्योपेक्षणव्यतिरिक्तनिग्रहस्थानप्राप्तौ तदनुद्भावनमेव निग्रहहेतुः । न स्वोपेक्षणानुद्भावनमपि । तथा सति द्वयोरपि वादिनोर्निग्रहानन्त्यप्रसङ्गात् प्रयोजनाभावाच्च नोपेक्षणानुद्भावनमुद्भावनीयम् तथानेकदोषसन्निपाते यदेकोद्भावनेनेतरोपेक्षणं तदप्यनुद्भाव्यमेव । अन्यथाधिकत्वप्रसङ्गात् । तेनोक्तमवश्योद्भाव्यमिति पुरःस्फूर्त्तिकानधिकृतोद्भावितानां झटिति संवरणेन तिरोहितावसराणां च उत्तरकाले

---

गृह्यते । एवं व्याख्यातवान् सूत्रमेवं व्याकृतवान् ॥ १७ ॥

तथा सतीति । पर्यनुयोज्योपेक्षणानुद्भावनस्यापि पर्यनुयोज्योपेक्षणत्वेन प्रथमस्खलनप्रवृत्तयोर्वादिप्रतिवादिनोस्तद्रूपनिग्रहपरम्परा प्रसङ्गादित्यर्थः । प्रयोजनाभावाच्चेति । दुष्टत्वेन पर्यनुयोज्यमात्रमुपेक्षितवानिति हि तदुद्भावनं तदा स्वदोषस्यापि कीर्तनादुभयोर्निगृहीतत्वेन जयपराजयनिरूपणप्रयोजनासिद्धेश्च । उपेक्षणस्योद्भाव्यत्वमेव न स्वतस्तदुद्भावनं निग्रहकारणमित्यर्थः(?) । अन्यथेति । दोषान्तराणामप्युद्भावने अनियमकथायां दूषणाधिकत्वप्रसङ्गादित्यर्थः । प्रयोजनाभावात् अन्योद्भावितोद्भावने स्वस्य जयपराजयाभावात् । झटिति परिहृतानामुद्भावने परस्परं पराजयाभावाच्चेत्यर्थः । उक्तार्थे निग्रहस्थान-

प्रयोजनाभावादुपेक्षणमेवोचितम् । अत एवोक्तमाप-न्नकालमिति । ततश्चावश्योद्भाव्योद्भावनकालमा-पन्नस्य यदनुद्भावनं तत् पर्यनुयोज्योपेक्षणमित्यर्थः । निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणमिति सूत्रमुक्तार्थे गमयितव्यम् । प्राप्तपर्यनुयोज्यशब्दयोर-र्हत्यर्थत्वात् । न चास्याप्रतिभासङ्करः प्रतिज्ञाहान्या-दिषु स्खलितोपेक्षणेन सदुत्तरमाददानस्याप्रतिभा-या असम्भवात् सम्भवाच्चोपेक्षणस्य । ननु न तावदिदं वादिनोद्भाव्यं पर्यनुयोज्यं मां त्वमुपेक्षितवानसीति स्वयमेव स्वदोषोद्भावनायोगात् । नापि प्रतिवादिना आत्मनैवात्मनि ग्रहायोगात् पर्यनुयोज्यत्वज्ञाने सत्युपेक्षणायोगाच्च । सत्यम् एतदाशङ्क्य परिहृतं वाचस्पतिमिश्रैः । सभापतिना वादिप्रतिवादिभ्यां वा पर्यनुयुक्तया परिषदा तन्निग्रहस्थानमुद्भावनीयमि-ति । विश्वरूपजयन्तयोः पुनः परमस्य शक्तिं जिज्ञा-समानेन मया आभासप्रयोगः कृतः । सोऽप्यनेन मन्द-

---

विशेषानुद्भावनं पर्यनुयोज्योपेक्षणमित्यत्र तदेवोपपाद-यति । प्राप्तपर्यनुयोज्येति । लक्षणगतप्राप्ततज्ज्ञानापन्नका-लनिग्रहव्यवच्छेदस्य लक्ष्यगतपर्यनुयोज्यशब्देनावश्योद्भा-व्येतरव्यवच्छेदस्य प्रसिद्धत्वादित्यर्थः(?) । पर्यनुयोज्योपे-क्षणं नाम तं प्रति न किञ्चिद्वचनं तथा सत्यप्रतिभेदमि-त्याशङ्क्याह । न चास्येति । क्षुद्रस्खलनेन तदनवधार्यमिति

मतिना नोद्भावित इति वदता वादिनोद्भावनीयमिति निश्चयः । वादे द्वयोरपि निग्रहात् परिषद एव विजयः । जल्पवितण्डयोस्तु साधनाभासेनापि प्रतिवादिनोहङ्कारखण्डनाद्वादी विजयत एव । अत्र त्रिलोचनवाचस्पतिप्रभृतीनां न काचिद्विप्रतिपत्तिरिति ॥ १८ ॥

अतन्निग्रहसम्प्राप्तं तन्निग्रहनिमित्ततः ।
निगृह्णतो निग्रहः स्यादयोग्यस्यानुयोगतः ॥ १९ ॥

सर्वथा निग्रहस्थानमप्राप्तौ निग्रहस्थानान्तरप्राप्तावप्युद्भाव्यमाननिग्रहस्थानमप्राप्तश्चातन्निग्रहसम्प्राप्तमित्युच्यते । तमपि तेनैव निग्रहस्थानेन निगृह्णतो निरनुयोज्यानुयोगो नाम निग्रहस्थानं भवति ॥१९॥

तस्यावान्तरभेदमाह ।

अप्राप्तकाले ग्रहणं ह्यन्याय्याभास एव च ।
छलानि जातय इति चतस्रोऽस्य विधा मताः ॥ २० ॥

---

शेषः । तस्मिन् विश्वरूपजयन्तयोर्मते कथाभेदाद्विशेषमाह । वादे द्वयोरिति । द्वयोरपि निग्रहात् । अत्र प्रस्तुतविश्वरूपजयन्तावेव ॥ १८ ॥

तेनैवाप्राप्तेन निग्रहस्थानेनैव ॥ १९ ॥

तत्र छलजाती दर्शिते । प्रतिज्ञाहान्यादीनामाभासाः प्रबोधसिद्धौ प्रपञ्चिताः । यथा अनेकविकल्पस्फुरणेन विकल्पयतोऽनिष्टकल्पत्यागेन प्रतिज्ञाहानिः । प्रकरणाद्यापन्नविशेषाविष्करणेन प्रतिज्ञान्तरम् । नञ्प्रयोगमात्रेण विरोधः । स्वारोपितानभ्युपगमेन संन्यासः । स्वयमगृहीतस्य विशेषणस्य पुनरुत्कीर्तनेन हेत्वन्तरम् । वस्तुतः प्रस्तुतानुगुणस्याप्यापाततस्तथानध्यवसायेनार्थान्तरम् । आत्मनो

---

अनिष्टकल्पत्यागेनेति । शब्दो नित्यः कृतकत्वादित्युक्ते शब्दस्य नित्यत्वमनित्यत्वं वा त्वया साध्यते । आद्ये विरुद्धहेतुः द्वितीये त्वसिद्ध इति प्रत्युक्ते वादिना न मया नित्यत्वपक्षोऽङ्गीकृत इत्युक्ते तर्हि प्रतिज्ञाहान्या निगृहीतोऽसीत्यर्थः । प्रकरणाद्यापन्नेति । विप्रतिपन्नशब्दो नित्य इत्युक्तेर्विप्रतिपन्नविशेषणेन नित्यत्वेन सम्प्रतिपन्नं ध्वनिमयोप्यवर्णात्मकः शब्दो नित्य इति हि साध्यते तदा प्रतिज्ञान्तरेण निगृहीतोऽसीति । नञ्प्रयोगेति । शब्दो नित्यः कृतकत्वादित्युक्ते प्रतिज्ञायां तस्मिन् हेतौ नास्ति अतः प्रतिज्ञाहेत्वोर्विरोधात् प्रतिज्ञाविरोधेन निगृहीत इति । स्वारोपितेति । शब्दो नित्यः कृतकत्वादित्युक्ते विरुद्धः कृतकत्वहेतुः कथं शब्दनित्यत्वं साधयेदित्यनुयुक्तेन वादिना न नित्यत्वमस्मत्साध्यं किं त्वनित्यत्वमित्युक्ते तर्हि प्रतिज्ञासन्न्यासेन निगृहीत इति । स्वयमगृहीतस्येति । शब्दो नित्यः सामान्यवत्त्वे सत्यस्मदादिबाह्येन्द्रियग्राह्यत्वादित्युक्ते सामान्यवत्त्वे सतीति विशेषणम् अस्ति सामान्ये व्यभिचार इति दूषितेन वादिना सामान्य-

वैयाकरणत्वेन वाचकप्रयोगे ऽपि निरर्थकम् । आत्मनः परिषदेकदेशस्य वानवबोधेनाविज्ञातार्थम् । पौर्वापर्यायोगेऽपि स्वयमप्रतिसन्धानेनापार्थकम् । अनवधानाद्विपर्ययेणाप्राप्तकालम् । अन्यत्र व्यासङ्गादश्रुतेन न्यूनम् । पार्श्वस्थाद्युक्तेन हेत्वादिनाधिकम् । श्रुतिसामान्यमात्रेण पुनरुक्तम् । तदप्रसिद्धपदैर्वानुवादेनाननुभाषणम् । अनवबोधितायामपि परिषदि स्वावष्टम्भमात्रेणाज्ञानम् । उत्तरं वदतोपि स्वेदादिना प्रतिभाक्षयः । आवश्यकप्राणिधर्मेण विक्षेपः । सिद्धसाधनेन मतानुज्ञा । स्वदोषोद्भावनेन हेत्वाभासा इति निग्रहस्थानाभासाः । तथानुयोज्यत्वेपि प्रतिज्ञाहान्यादौ प्रतिज्ञान्तरादिस्थले ऽपि जातिः । वाक्छलादावपि छलत्वेनोपचाराच्छलादिसाधर्म्यसमादौ जातित्वेन प्रकरणसमादीति ॥ २० ॥

अप्राप्तकालग्रहणं तु स्वंस्वमवसरमप्राप्यातिक्रम्य वा निग्रहस्थानानामुद्भावनमिति । किमेषामुद्भावनकालो नियतः येन तदुल्लङ्घनं निग्रहहेतुः स्यात्।

परत्वे सतीति विशेषितस्य कथं व्यभिचार इत्युक्ते तर्हि हेत्वन्तरेण निगृहीत इति । वस्तुतः प्रस्तुतो नित्यः शब्दो नित्यं कृतकत्वात् कृतकश्च शब्दः अनभिव्यञ्जकप्रयत्नानन्तरोपलब्धित्वात् न विशेषणासिद्धो हेतुः प्रयत्नस्याभिव्यञ्जकत्वे प्रतिवादिवद्युगपत्सकलशब्दाभिव्यञ्जकत्वप्रसङ्गादित्युक्ते तर्हि हेत्वन्तरमति निगृहीत इति ॥ २० ॥

ओमित्याह ॥

उक्तग्राह्याः केचिदन्ये ऽनुक्तग्राह्यास्तथापरे ।
उच्यमानदशाग्राह्या इति कालस्त्रिधा स्थितः ॥ २१ ॥

नैतन्मया ज्ञायत इत्युक्तमेव ग्राह्यमज्ञानम् । तदुक्तिमन्तरेणापि जातमात्रमेव ग्राह्यं हेत्वन्तरादि । जायमानावस्थायामेव ग्राह्यमपशब्दार्थान्तरादि । तदिदानीमुपेक्षाकारणाभावादिति । उद्भावनकालस्त्रिधा व्यवस्थितः । तत्रोच्यमानग्राह्यमपशब्दादिकमुत्तरकालमुद्भावयतो निग्रहस्थानं भवति । एवमितरत्रापि दर्शयितव्यमिति । तदेतत्सर्वमभिप्रेत्योक्तम् अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोग इति ॥ २१ ॥

सिद्धान्तमेकमालम्ब्य तद्विरुद्धपरिग्रहे ।
अपसिद्धान्ततः सिद्धं निग्रहस्थानमक्षयम् ॥ २२ ॥

यस्य कस्यचिच्छास्त्रस्य सिद्धान्तमालम्ब्य कथायां प्रवृत्तायां मध्ये तत्सिद्धान्तविरुद्धार्थान्तरपरिग्रहे त्वपसिद्धान्तो नाम निग्रहस्थानं भवति । यथा एकप्रकृतयो महदादिविकारा एतद्रूपान्वितत्वात् घटवदित्युक्ते का प्रकृतिः के वा विकारा इति पृष्टः

साङ्ख्यो यदि यतः प्रसन्तो भावा जायन्ते सा प्रकृतिः जननाशवन्तो भावा विकारा इति वदति। तदा स्वस्य सत्कार्यवादपरित्यागादपसिद्धान्त इति। न चान्यसिद्धान्तमाश्रित्य कथाप्रवृत्तिः सम्भवति। अन्यथा क्षणभङ्गसाधनं प्रयुञ्जानो बौद्धोऽस्फूर्त्तिको नैयायिकेन सिद्धसाधनतामुद्भाव्य निगृह्येतेति। न चास्य विरोधान्तर्भावः शङ्कनीयः। तस्यात्मीयवाक्यान्तरव्याघातात्मकत्वात्। अस्य च मूलाचार्यवाक्यव्याघातरूपत्वात्। न चायमागमविरोधः उभयप्रसिद्धप्रमाणभाववाक्यान्तरविरोधरूपत्वात् तस्य। यथा इदानीमिव सर्वत्र दृष्टान्ताधिकमिष्यत इति वदतो मीमांसकस्य सृष्टिप्रलयप्रतिपादकवैदिकवाक्यविरोधः। स्वाभ्युपगतप्रामाण्यतीर्थङ्करवाक्यविरोधात्मकोऽयमपसिद्धान्त इति विशेषः। अस्फूर्त्तिसमये ह्यस्मत्सिद्धान्तानभिज्ञोऽयमिति प्रतिवाद्यज्ञानादन्यथा व्याख्यास्यामीति गौडीयादेकदेशिमतं तदिति वैयात्याद्वास्योक्तिसम्भवः। सूत्रं तु सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्त इति ॥ २२ ॥

हेत्वाभासाः प्रसंख्याता येन रूपेण लक्षिताः।
तेऽपि तेनैव रूपेण निग्रहस्थानसञ्ज्ञिताः ॥ २३ ॥

पूर्वं ये सावान्तरभेदाः सव्यभिचारादयः पञ्चप्रकारा हेत्वाभासा लक्षिताः ते ऽपि तेनैव हेत्वाभा-

स्वरूपेण निग्रहस्थानं भवन्ति । तदुक्तम् । हेत्वाभासाश्च यथोक्ता इति । तथैव निग्रहस्थानमिति शेषः । चकारेण साध्यविकलत्वादिदृष्टान्तदोषमनुपदर्शितान्वयत्वाद्युक्तिदोषमात्माश्रयत्वादितर्कप्रतिघातमनुक्तं त्रयमपि समुच्चिनोति । तेषां च हेत्वाभासान्तर्गतत्वात् पृथगनभिधानं तदनन्तर्गतावपि प्रतिज्ञाविरोधवत् स्वयमपि स्पष्टप्रतिपत्तित्वेन पृथगुद्भाव्यत्वाच्चकारेण समुच्चयः । तर्हि विरोधोपि समुच्चीयतां किं पृथगुपादानेन । नैवम् तस्यावयवान्तरे दूषणे ऽपि सम्भवेनासङ्कीर्णोदाहरणसम्भवात् । यद्येवं प्रतिकूलतर्का अपि दूषणे सम्भवन्तः पृथगुपादीयेरन् । सत्यम् उपात्ता एव सूत्रकारैरेव जात्युत्तरे तेषां प्रपञ्चितत्वादिति ॥ २३ ॥

एते हान्यादयो हेत्वाभासावसानान्ताः सर्वे ऽपि निग्रहहेतवो यथायथं सभासङ्क्षोभादिभिस्तत्कारणैर्जल्पवितण्डयोरुभयोरपि सम्भवन्ति अवश्योद्भावनीयाश्च । अन्यथा पर्यनुयोज्योपेक्षणप्रसङ्गात् । उद्भाविताश्च कथामपि पर्यवसाययन्ति । सर्वेषामपि जयपराजयव्यवस्थाहेतुत्वात् तन्मात्रफलत्वाच्च जल्पवितण्डयोरित्याह ॥

**एते सम्भविनः सर्वे समुद्भाव्याश्च निग्रहाः ।**

विच्छेदकाः कथायां च द्वयोर्जल्पवितण्डयोः
॥ २४ ॥

वादे तु निग्रहस्थानप्रकारचातुर्विध्यमाह ॥

चतुर्द्धा निग्रहगतिर्वादे ऽसम्भववर्जिताः ।
अनुद्भाव्यास्तथोद्भाव्याः कथाविच्छेदका इति
॥ २५ ॥

तत्रासम्भविनस्तावदाह ॥

अर्थान्तरमविज्ञातं हानिर्न्यासो निरर्थकम् ।
अपार्थकमिति प्रायः षट्कं वादेष्वसम्भवि
॥ २६ ॥

एतेषामर्थान्तरादीनां स्वाज्ञानसंवरणपराज्ञानप्रकाशनमात्रफलत्वेन प्रवृत्तेर्वादे च तदुभयासम्भवादसम्भावितत्वम् । प्रमादादिना कथञ्चित् तत्रापि सम्भवमाशङ्क्योक्तं प्राय इति ॥ २६ ॥

सम्भवे ऽप्यनुद्भावनीयानाह ॥

विक्षेपोऽप्रतिभाज्ञानं हेत्वन्तरमुपेक्षणम् ।
साध्यान्तरं मतानुज्ञा वादे ऽनुद्भाव्यसप्तकम्
॥ २७ ॥

साध्यान्तरमिति प्रतिज्ञान्तरमुच्यते । प्रमादादिना सम्भवतामप्येषामनुद्भावनेनापि कथाप्रवृत्तौ तत्त्वनिर्णयाविघातादनुद्भाव्यतेति ॥ २७ ॥

सम्भवत उद्भावनीयानाह ॥

**न्यूनाधिकापसिद्धान्तविरोधाननुभाषणम् ।**
**पुनरुक्तं[१] विपर्यासो वादेपूद्भाव्यसप्तकम् ॥ २८ ॥**

न्यूनत्वादिदोषदूषितस्य साधनस्य तत्त्वावसायहेतुत्वाभावात् न्यूनत्वादिकमुद्भाव्यं तत्समाधानेन कथा प्रवर्तनीया । न त्वेते कथाविच्छेदहेतवो भवन्तीति ॥ २८ ॥

हेत्वाभासो हि कारणं तथा निरनुयोज्यानुयोग इति च निग्रहस्थानद्वयं सम्भवादुद्भावनीयं कथाविच्छेदकं चेत्याह ॥

**वादे कथावसानस्य हेत्वाभासो हि कारणम् ।**
**तथा निरनुयोज्यानामनुयोग इति द्वयम् ॥ २९ ॥**

**इति वरदराजकृता तार्किकरक्षा समाप्ता ॥**

हेत्वाभासेन साध्यस्यासिद्धेस्तत्परित्यागेन सम्यग्घेतूपादानावश्यम्भावात् सर्वापक्रान्ता कथा विच्छिद्यत एव । निरनुयोज्यानुयोगश्च तत्त्वावसायानङ्गं कथाभासप्रबन्धहेतुत्वेन कथापर्यवसानहेतुर्भवति । केचित्तु वादसूत्रे सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति च विशेषणोपादानादपसिद्धान्तः स्वसिद्धान्तसिद्धावयवपरिमाणान्यूनतामधिकतां च कथाविच्छेदनिमित्तमित्याचक्षत इति ॥ २९ ॥

(१) पुनरुक्तिः–पा॰ B पु॰ ।

न्यायविद्याविदग्धस्य मीमांसापारदृश्वनः ।
इयं वरदराजस्य कृतिर्विजयतेतराम् ॥

आलोड्य दुस्तरगभीरतरान् प्रबन्धान्
वाचस्पतेरुदयनस्य तथापरेषाम् ।
सारो मयात्र समगृह्यत वावदूकै-
र्नित्यं कथासु विजिगीषुभिरेष धार्यः ॥

इति श्रीवरदराजविरचिते तार्किकरक्षाव्याख्याने
सारसंग्रहे तृतीयः परिच्छेदः ॥

समाप्तमिदं वरदराजविरचितं सारसंग्रहाभिधानं
न्यायप्रकरणम् ॥

शिवमस्तु ॥

---

सर्वैश्वर्यनिजावासं सर्वविद्यानिसेवितम् ।
श्रीयज्ञेश्वरहरेः सूनुं श्रीविष्णुस्वामिगुरुं नुमः(१) ॥

इति श्रीज्ञानपूर्णकृता वरदराजीयसारसंग्रहटीका
लघुदीपिका समाप्ता ॥

मङ्गलमस्तु ॥

---

(१) श्रीयज्ञेश्वरहरेः सूनुमित्यत्र श्रीविष्णुस्वामिगुरुमित्यत्रापि श्रीशब्दप्रयोग उपचारार्थः अन्यथा छन्दोभङ्गापत्तेः ॥